Sasthramukthavali; No, 24.

The 

# THAITHIRIYOPANISHADBHASYAM.

BY

*SRI KURANARAYANAMUNI.*

Edited By

P. B. ANANTA CHARIAR, Sanskrit Pundit.

Printed at the Sri Sudarsana Press.

CONJEEVERAM.

1905.

Price Rs 2-8-0

शास्त्रमुक्तावली—१३

# तैत्तिरीयोपनिषद्भाष्यम् ।

श्रीकूरनारायणमुनिविरचितम् ।

श्रीकाञ्ची प्रतिवादिभयंकरं अनन्ताचार्येण परिशोधितम् ।

श्रीसुदर्शनमुद्राक्षरशालायां अमुद्यत ।

॥ श्रीकाञ्ची ॥

१९०९

इदानीमेतन्मूल्यम् २-८-०

श्रीरस्तु ।

शास्त्रमुक्तावळी ।

श्रीमते हयग्रीवाय नमः ।

# तैत्तिरीयोपनिषत् ।

श्री कूर नारायणमुनि विरचितेन

भाष्येण सहिता ।




यस्य ह्यानन्दपर्यन्ता युवत्वप्रमुखा गुणाः ।
अप्रमेयतयाम्नाता स्तं श्रीशं संश्रयेमहि ॥ १ ॥
सांहितीष्वपि सन्धाता सर्वेशः प्रतिपाद्यते ।
वारिता वरणो योसौ वारुणो वारुणीष्वपि ॥

इह खलु संसारावर्तपरिवृत्तिपरिश्रान्तमानसै स्तदुत्तरणोपाय बुभुत्सुभि स्सर्वै श्चेतनै स्सर्वपुरुषार्थसार्थवाहकाः नित्यनिर्दोषा वेदा स्तावत् स्समाश्रयणीयाः । तत्रापि मुमुक्षुभिः विशेषतः त्रय्य-न्ता स्सेव्यः । तत्रापि तैत्तिरीयारण्यकमध्यपातिन्यः सांहित्यो वारुण्यो याज्ञिक्य स्संसारिणां शरणं, तासां नारायणस्वरूपरूपगुण विभूत्यादिषु तात्पर्यातिशयात् । आधिलौकिक्यादि पंच महासंहितासु भावना नुसन्धानप्रधाना स्सांहित्यः "शन्नो मित्र" इत्यारभ्य द्वादशानुवाकाः । देवताचानुसन्धाता सर्वेश्वर इति देवतानुक्रमण्यां स्मर्यते । तत उत्तरास्त्रयोनुवाका वारुण्यउपनिषदः, वरुणनाम्ना ऋषिणा प्रोक्तत्वात् । देवता च सर्ववरणशीलो वारुण स्स्मृतः । "अम्भस्य पार" इत्यारभ्य समस्तः प्रश्नो याज्ञिक्य उपनिषदः, महा मना भावता नारायणेन दृष्टत्वात् । देवता च स एव । तत्र

त्राव रस्मिहित्यो वारुण्य श्च व्याकम्पन्त न । सर्वासु परविद्यासु ब्रह्मो पासनस्य परप्राप्तिः फलत्वेनो पदिश्यते । यथा ब्रह्मविदाप्नोति पर " मिति । ननु – " आत्मा द्रष्टव्य " इत्यादि विध्यर्थत्वा दियं फलश्रुति रर्थवादो भवेत् । नैवं, प्रकरणाद्यभावे कथ मस्याः परा र्थता । सर्ववेदान्तप्रत्ययन्यायेन सर्वासां विद्याना मैक्यदर्शना त्प रार्थत्व मिति चेन्न;- गुणोपसंहारपादे विद्यानां भेदस्य प्रतिपादित त्वात । [ सर्वविद्याना मैक्यं न सम्भवेत ] विद्यानां कर्मांगत्वादिकं भाष्य एव निरस्तम् । नच कल्पसूत्रकारः कर्मांगत्व मासा मुपदिशति । आसुपरविद्यासु सर्वाश्रमिणां अनाश्रमिणश्च विधुरादे रधिकारित्वं सूत्रकारेण निर्णीतम् । तस्मा त्स्वतन्त्रोयं परमपुरुषार्थरूपो मुमुक्षू णामेवा पूर्वार्थो त्र विधीयते । परस्य ब्रह्मणस्समीपे वाचकतया निषीदन्ती त्युपनिषदः । परब्रह्म प्रतिपादकत्वा तत्प्राप्ति हेतुत्वाच्च पुरविद्याएताः । तत्र तावत्प्रथमेना नुवाकेन परविद्या मारभमाण [illegible]प्रायूह शान्त्यर्थं [ भोगिमुमुक्षु ] मित्रवरुणादिदेवताः प्रार्थ्यते

शन्नोमित्रश्शंवरुणः, शन्नोभवत्वर्यमा, शन्न

इन्द्रोबृहस्पतिः, शन्नोविष्णुरुरुक्रमः, नमोब्रह्मणे,

( शंनोमित्र ) इत्यादिना । नः – अस्माकं, आचार्यस्य मम सब्रह्म चारिणांच । मित्रः – सर्वस्यमित्रभूतः । मेद्यति – स्निह्यतीतिमित्रः । [तथा सर्वस्य चाहं मित्रमस्मीति] प्रकाशादिदानेन सर्वोपकारकस्सूर्यः । शं - सुखं । भवतु - सुखहेतुर्भवत्वित्यर्थः । शंवरुणश्च तथा पाशैरावृ णोतीति – वरुणः । अविघ्नेनाध्ययनसम्पत्तिसुखेन विद्यालाभोत्रसुखं । " मित्रोऽहरजनय द्वरुणोरात्रि " मित्येतदुपलक्षितयो रहोरात्रयोःसुख मभ्यर्थयते । अर्यमा – आदित्यविशेषः । इयर्ति - अस्ताचलं गच्छ तीति – अर्यमा । ऋगताविति धातुः । " असौवादित्योर्यमा " इति । धर्मेणा मीश्वरत्वमत्र विवक्षितम् । एवमादयोपि सुखहेतवो

भवन्तु । इन्द्रः - वर्षादिप्रदानेन लक्ष्मणां पोषकः । बृहस्पतिः ज्ञानपोषकः । विष्णुः - व्यापनशीलः । विष्लृव्याप्तौ - व्याप्नोतीति विष्णुः । विष्लृ - व्याप्ताविति धातुः । सर्वकालं सर्वाणि भूतानि आत्मतया व्याप्य नियन्ता परमेश्वरः । " उरुक्रम " इति व्याप्तेः फलं दर्शयति । विश्वमाक्रम्य स्व वशे कुर्वन्नित्यर्थः । ब्रह्मणे -

नमस्तेवायो, त्वमेवप्रत्यक्षं ब्रह्मासि, त्वामेवप्रत्यक्षं ब्रह्मवदिष्यामि, ऋतंवदिष्यामि, सत्यंवदिष्यामि॥१॥

वेदात्मने । नमः । वाति - गच्छतीति - वायुः । वागतिगन्धनयोरिति धातुस्मरणात । हे वायो ! तुभ्यं नमः । वेदानन्तरं वेदाभिव्यक्ति हेतु वायुर्नमस्क्रियते । सर्वे शब्दावाय्वधीनाभि व्यक्तयः । तस्मा द्ब्रह्माभि व्यक्तिहेतुत्वात त्वमेवप्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मवदिष्यामि - त्वदधीनाभिव्यक्तिकत्वात् त्वामेव ब्रह्मवदिष्यामि, तस्मात् त्वमपि नश्शम्भवेविशेषः । ऋतं वदिष्यामि - ऋतम् - सुकृतस्यकर्मणः प्रतिपादकं, सत्यं - सत्यस्य परब्रह्मणः प्रतिपादकंच,

तन्मामवतु, तद्वक्तारमवतु, अवतुमां, अवतु वक्तारं, ॐ शान्तिश्शान्तिश्शान्तिः॥ सत्यंवदिष्यामि पंचच ॥

।इति प्रथमोऽनुवाकः ।

---

वेदात्मानं त्वां वदिष्यामि । तत - तथोच्यमानं, आचार्याद्व वर्तनादिशास्त्रोक्तप्रकारेण धीयमानम् । माम् । अवतु - रक्षतु । तद्वक्तार मवतु - हृदय मनुप्रविश्य तिष्ठतु । अथवा वक्तृत्व - आ-

चार्यत्वं, तद् मम करोतु । "तन्मा मवतु तद्वक्तार मवतु" इति वचनकाले य द्रक्षणं त त्प्रार्थितम् । इदानीं सर्वदा रक्षणं प्रार्थयते । अवतु मां - सर्वदा अवचनकालेपि । अवतु वक्तारं - सर्वदा वक्तृत्वं आचार्यत्वं वा मम करोतु । शान्ति श्शान्ति श्शान्तिः - सुखं प्रत्यूहशमनं वा । अस्त्विति शेषः । अभ्यास आदरातिशयार्थः, तापत्रयशान्त्यर्थो वा ।

इति श्री कूर नारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

सांहितीषू पनिषत्सु

प्रथमोऽ नुवाकः ॥ १ ॥

---

## शीक्षांव्याख्यास्यामः, वर्णस्स्वरः, मात्राबलं,

"मन्त्रो हीन स्स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न त मर्थ माह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रु स्स्वरतोपराधात्" इति स्मृतेः स्वरवर्णादिदुष्टस्य वेदस्याभिमता साधकत्वात् प्रत्य वायश्रवणाच्च स दोषः परिहर्तव्य इति तत्प्रतिपादनार्थं स्वरवर्णाद्य नुशासनरूपं शीक्षाशास्त्र मनुस्मारयति ( शीक्षा मिति ) शिक्ष्यन्ते - ज्ञानेन निश्चीयन्ते, वर्णादयः अनयेति - शिक्षा । "गुरोश्च हलः" इत्यकारप्रत्ययः । छान्दसो दीर्घः । ता मिमां शिक्षाम् । व्याख्यास्यामः - विशेषेणाख्यास्यामः, प्रब्रमः । अथवा - शिक्षाख्यं पंचमं वेदांगं त्रय्यन्ताध्ययनसाधनत्वेना चक्ष्महे । वर्ण स्स्वरः - वर्णो नामाकारादिः । जाता वेकवचनम् । आहुश्च शीक्षाकाराः "त्रिषष्टिश्च चतुष्षष्टि र्वर्णा श्शम्भुमते स्थिताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ स्वरा विंशति रेक, श्च स्पर्शानां पंच विंशतिः । यादय श्च स्मृता ह्यष्टौ चत्वार श्च यमा स्स्मृताः ॥ अनुस्वारो

विसर्गश्च कः पौचापि पराश्रयौ । कुरपृष्ट श्चेति विज्ञेया लकारः प्लुत एव च " इति । स्वराः – उदात्तादयो वर्णधर्माः । स्थान विशेषनिबन्धनाः ध्वनिभेदा श्चत्वारः – उदात्तानुदात्तस्वरितप्रचयाः । समेत्यन्ये - उदात्तानुदात्तस्वरितप्रचयसन्नतरोच्चतरैकश्रुतयः ॥ मात्राबलं- मात्रा उच्चारणक्रियाकालस्य इयत्ता । यथा – पादमात्रा अर्धमात्रा लघुरित्यादि । आहुश्च– "यद्व्यंजनान्तं यदुचापिदीर्घं संयोगपूर्वंच तथानु नासिकम् । एतानिसर्वाणि गुरूणिविद्यात् शेषाण्यतोन्यानि ततोलघूनि" इति । तथा– " ऋग्विरामः पदविरामो विवृत्तिविराम स्समान पदविवृत्तिविराम स्त्रिमात्रोद्विमात्र एकमात्रोर्धमात्र इत्यानु पूर्व्येण " इति । ऋग्विरामः - त्रिमात्रः, पदविरामः - द्विमात्रः, विवृत्तिः – पदद्वयानुसन्धानं, तदेकमात्रं, समानपदविवृत्तिः - एकस्मिन् पदे वर्णयोरनुसन्धानं । यथा – " प्रउगग्चितश्चिन्वीत " इति । तथा मात्राप्रमाणे " चाषस्तुवदतेमात्रां द्विमात्रंवायसोब्रवीत् । त्रिमात्रन्तु शिखीरौति ह्येत न्मात्रादिलक्षणं " इत्यादि । बलं - वायोस्स्थान [ पीडन ] विशेषोबलं । यद्विशेषा द्वर्णविशेषा स्तद्धर्मविशेषा श्चा– विर्भवन्ति । यत्र स्थानकरण वैलक्षण्येन उपांशुध्वान निमदोपब्दि न्मध्यमन्द्रमध्यमतारांणि वाचस्स्थानानि सप्तजायन्ते । तत्रमन्द्रादिषु सप्तस- प्तयमाः कुष्ट प्रथमद्वितीय तृतीयचतुर्थ मन्द्रातिस्वार्याः । एषांसत्यापि स्वरत्वेबलहेतुत्वात् पूर्वत्रनोक्ताः । एतेच पूर्वं पूर्वं दृप्ताः । द्वितीयः प्रथम कुष्टः त्रयश्चाह्वारकस्स्वरः । मन्द्रादयो द्वितीयान्ताश्चत्वार स्तैत्तिरीयकाः ॥ नादश्चास घोषात्मकानि चानुप्रदानानि बलनिबन्धनाः ।

सामसन्तानः, इत्युक्तश्शीक्षाध्यायः ॥ शीक्षां पंचं ॥

इति द्वितीयोऽनुवाकः ।

---

उच्चारणे समतासाम, " सामसान्त्वने " औणादिकः कनि न्प्रत्ययः । यथाहुः - " क्रमविक्रमसम्पन्ना मद्रुतामविलम्बितां । नीचोच्चस्वरसम्पन्नां

षडेंद्भूतवर्तांखमा " मिति । तत्रस्वराणा मुदात्तादीनां सन्निवेश· विशेषौ क्रमविक्रमौ । सन्तानः-संहिता "अथ चतस्रस्संहिताः पदसंहिता अक्षरसंहिता वर्णसंहिता अंगसंहिताचेति । अत्राहुः – " गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानिच । लोपागमविकाराश्च प्रकृतिर्विक्रमःक्रमः । स्वरितोदात्तनीचत्वं श्वासोनादोंगमेवच । एतत्सर्वन्तु विज्ञेयं छन्दोभाषा मधीयता । " ॥ अत्र वर्णादिषट्कोपादानस्य उपलक्षणार्थत्वात् सर्वमिदं संगृहीतं वेदितव्यं । तज्ज्ञानेफलं दर्शयति " पदक्रमविशेषज्ञो वर्णक्रमवि चक्षणः । स्वरमात्राविभागज्ञो गच्छेदाचार्य संसदम् " इति । आचार्याः-व्यासादयः, तेषांसंसदं – ब्रह्मलोक मित्यर्थः । एवं वर्णा· दीनां स्वरूपं स्वभावंच ज्ञात्वा यस्तथाध्यापयति अधीतेवा सब्रह्मण स्सालोक्यं सायुज्यंगच्छति । इत्युक्तश्शीक्षाध्यायः – इत्थं शिक्षाध्याय संग्रहोस्माभिरुक्तइति । अत्र वर्णादिविशेषाणां तत्फलस्यचा नुक्तत्वात् तत्सर्वं शिक्षाशास्त्रेज्ञातव्यं, तस्य सर्वस्य प्रसंगादवसरे स्मरणमात्रं कृत मस्माभिरितिभावः ।

इति श्री कूर नारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

सांहितीमु पनिषत्सु

द्वितीयोऽनुवाकः ॥ २॥

---

## सहनौयशः,सहनौब्रह्मवर्चसं,अथातस्सँहिताया

अथ शिष्याय विद्यांप्रदित्सुराचार्यो विद्याफलं शिष्यस्य स्वस्य च साधारणं भवत्वित्याशास्ते " सहनौयशः सहनौब्रह्मवर्चसं " इतिमन्त्रेण । नौ – आवयोः शिष्याचार्ययोः । यशश्च ब्रह्मवर्चसंच । सहास्तु – विद्यानिमित्तं यशः, तन्निमित्तं ब्रह्मवर्चसंच ममास्तु; यथा कस्मैचिद्वराय प्रतिपादितायां कन्यायां पुत्रादिकं फलं तस्यैव वर स्यभवति, नतथास्त्वित्यर्थः । " अथात " इत्यादिब्राह्मणं वक्ष्यमाग

उपनिषदं व्याख्यास्यामः, पंचस्वधिकरणेषु, अधि लोकमधिज्यौतिषमाधिविद्यमधिप्रजमध्यात्मम्, ता महासँहिताइत्याचक्षते, अथाधिलोकम, पृथिवीपूर्व रूपम् , द्यौरुत्तररूपम , आकाशस्संधिः ॥ १ ॥

वायुस्संधानं, इत्यधिलोकम् ,अथाधिज्यौतिषम्,

विद्यांगभूत मन्त्राद्यादि फलभावनाविशेषं विदधाति । अथशब्दः – आनन्तर्यंद्योतयति, विद्यांगभूताध्ययन तद्गुणादीना मनन्तरमिति । अतश्शब्द स्तेषामेवाध्ययन गुणानां विद्याधिगमहेतुत्वं दर्शयति । संहिताया उपनिषदं व्याख्यास्यामः – संहिताया उपनिषदं – संहिता वर्णानुसन्धानं , तस्मिन् भावनाविशेष उपनिषत , तामुपनिषदंगुह्यं, व्याख्यास्यामः – विशेषेणाचक्ष्महे । पंचस्वधिकरणेषु - तस्या स्संहि ताया अधिष्ठानानि लोकादयः पंच, तेषु सन्धीयमाना वर्णास्संहिता भाव्यते । तत्रैकैवसंहिता अधिकरणभेदेन पंचधाभवन्तीति पंचसंहि ता भवन्ति । ताः प्रशस्तत्वा न्महासंहिता इत्युच्यन्ते । अधिलोकम्– लोके । “ अव्ययं विभक्ति ” इत्यादिना विभक्त्यर्थे व्ययीभावः । तामहासंहिता इत्याचक्षते - ताएताः पंचसंहिताः पूज्यत्वात् महासंहि ताइत्याहुः । सन्महदित्यादिना समासः । अथाधिलोकं - अधिलोकेया संहिताविद्यते तांसंहिता मन्त्रक्रमइत्यर्थः ( पृथिवीपूर्वरूप मित्यादि ) अध्ययनकाले वेदे वर्णौ सन्धीयेते सहोच्चार्यंते, तयोः, पूर्वरूपं - पूर्वो वर्णः, पृथिवी, वेदितव्या । द्यौरुत्तररूपं - उत्तरो वर्णो द्यौरिति वेदितव्या । आकाशस्सन्धिः - तयो वर्णयो रन्तराळ आकाशोवेदित व्यः । वायुस्सन्धानं - पूर्वोत्तरयो स्सहोच्चारणार्थो यो यत्नः स वायु रिति वेदितव्यः । इत्यधिलोकं - इत्थं लोके संहिताभाव्येति । अथा

अग्निः पूर्वरूपम् ,आदित्य उत्तररूपम्,आपस्संधिः, वैद्युतस्संधानं, इत्यधिज्यौतिषं, अथाधिविद्यं, आचार्यः पूर्वरूपं ॥ २ ॥

अन्तेवास्युत्तररूपं,विद्यासंधिः, प्रवचनंसंधानं, इत्याधिविद्यं, अथाधिप्रजं, मातापूर्वरूपं, पितोत्तररूपं, प्रजासंधिः,प्रजननंसंधानं,इत्यधिप्रजम् ॥ ३ ॥

अथाध्यात्मं, अधराहनुःपूर्वरूपं, उत्तराहनुरुत्तररूपं,वाक्सन्धिः,जिह्वासन्धानं,इत्यध्यात्मम।

धिज्यौतिषं - अनन्तरं ज्योतिषि या संहिता तामत्रव्याख्यास्यामः ( अग्निः पूर्वरूपमित्यादि ) " अग्नौप्रास्ताहुति स्सम्यगादित्यमुपतिष्ठते । आदित्या ज्जायतेवृष्टिः" इत्यादिप्रकारेण अग्न्यादित्यवैद्युतादीनां पूर्वोत्तरादिभावः । वैद्युतस्सन्धानं - वैद्युतोहि विद्युतमुत्पादयति । इत्यधिज्यौतिषं -इत्थं ज्योतिषि संहिताभावना प्रकारउक्तः । अथाधिविद्यं-विद्यायां यासंहिता तां व्याचक्ष्महइति । विद्यासन्धिः-विद्या - वेदः, ससन्धिः सासंहिता । प्रवचनं सन्धानं, प्रवचनं-अध्यापनं । अथाधिप्रजं-प्रजायां यासंहिता तां व्याचक्ष्मह इति । प्रजननं सन्धानं - प्रजार्थं निषिच्यमानं शुक्लम् । अथाध्यात्मं - आत्मनिशरीरे यासंहिता सा प्रोच्यते । अधराहनुःपूर्व रूपं - आस्यपर्यन्तप्रदेशा हनवः । अधरोत्तरौ पर्यन्तौ गृह्येते । इतीमामहासंहिताः - इत्थमिमाः पूजितास्संहिताः व्याख्याताः । एत

...तीमामहासंहिताः, यएवमेतामहासंहिताव्याख्याता वेद, संधीयते प्रजयापशुभिः, ब्रह्मवर्चसेनान्नाद्येनसुवर्गेण लोकेन ॥ ४ ॥

संधिराचार्यःपूर्वरूपमित्यधिप्रजंलोकेन ॥३॥

इति तृतीयो ऽनुवाकः ।

यश्छन्दसामृषभोविश्वरूपः, छन्दोभ्योऽध्यमृता

एतद्वेदनेफलं दर्शयति ( य एवमेता इत्यादि ) अत्र संहिताज्ञाने दृष्टान्यफलादर्शनात् संहिताव्याख्यानमिदं उपासनार्थम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने सांहितीषू पनिषत्सु तृतीयो ऽनुवाकः ॥ ३ ॥

'यश्छन्दसा' मित्यनुवाको ज्ञानजननार्थ जपादौ विनियुज्यते । यश्छन्दसा मित्येतेषां मध्ये ज्योतिस्त्रिष्टुप् , ततः त्रिपदा गायत्री शिष्टं यजुरिति । अत्र परब्रह्मवाचकः प्रणवः विद्यांगत्वेन स्तूयते । अत्र शब्दब्रह्मभूतस्य प्रणवस्य परब्रह्मभूतस्य नारायणस्यच साधर्म्यं प्रतिपाद्यते। यः छन्दसां-उक्ताद्युत्कृतिपर्यन्ताना मक्षरसंख्याविशेषवान्विनां छन्दोभाषात्मनां शब्दतत्वानाम् । ऋषभः - उत्पादकत्वेन स्थितत्वा सर्ववचसां वर्षिता संवर्धकः, सोपि सर्ववेद्यानां धारकपोषकभोग्यत्वेन वर्षिता । विश्वरूपः - विश्वं शब्द जातं अनेन रूप्यते विस्तार्यते इति विश्वरूपः । परब्रह्मणोपि सर्वात्मकत्वेन विश्वरूपत्वं प्रसिद्धम् । छन्दोभ्योऽध्यमृता त्सम्बभूव - अपौरुषेयेभ्यो वेदेभ्यः, अधि - आधारत्वेन स्थितः, अमृतात् - परब्रह्मणः, सम्बभूव, यस्मादेवं, तस्मात्

धसंबभूव, समेंद्रोमेधयास्पृणोतु, अमृतस्यदेवधारणोभूयासं, शरीरंमेविचर्षणं, जिह्वामेमधुमत्तमा, कर्णाभ्यांभूरिविश्रुवं, ब्रह्मणः कोशोसि मेधयापि

प्रणवः छन्दोभ्योधि -धारकत्वेन उत्कृष्ट इति यावत् । तथाच मनुः - " आद्यन्तु त्र्यक्षरं ब्रह्म त्रयी यत्र प्रतिष्ठिता । सगुह्योन्यस्त्रिवृद्वेदो य स्तं वेद स वेदवित " इति । अन्यत्र - अमृतात् - परमपदात्, छन्दोभ्योधि - छन्दसां वाच्यत्वेन, य स्सम्बभूव - स्वय माविरभूत् । " य एष स्वय मुद्भवा " विति । समेन्द्रो मेधया स्पृणोतु - सः प्रणवरूपी, सर्वशब्दानां तद्वाच्याना मिन्द्रः - निर्वाहकः, मा, मेधया स्पृणोतु - ग्रन्थार्थधारणरूपा बुद्धिः मेधा, तया, स्पृणोतु - स्पर्श यतु, स प्रीतो मेधा जननेन मां प्रीणयत्विति, अन्यत्र निगदार्थः । अमृतस्य देवधारणो भूयासं - ज्ञानदानतदभावाभ्यां पूर्वं ब्रह्मादि स्थावरान्तं तत्वजातं बुध्वा मुक्त्वा स्वेच्छं संक्रीडमानः, अमृतस्य-अमृतत्वस्य, सर्वेश्वरस्य प्राप्तिहेतो र्दिव्यज्ञानस्य, अहं धारणः - धारयिता, भूयासं, अन्यत्रापि समानम् । "शरीर" मित्यादि । हे देव । तव प्रसादात्, मे - मम, शरीरं, विचर्षणम् - विशिष्टेन्द्रियकम् भूयात्, मम ज्ञानकर्मात्मकानि सर्वाणीन्द्रियाणि विशिष्टज्ञानशक्तिकानि भगवत्स्मरणकीर्तनभजननमननादिसमर्थानि भवन्त्विति यावत् । अपि च - जिह्वा मे मधुमत्तमा - मम जिह्वा, अतिशयेन सर्वेषां श्रोत्रेन्द्रिय भोग्यशब्दजननी भूयात् । कर्णाभ्यां भूरिविश्रुवम् - हे देव! तव प्रसादात्, अहं कर्णाभ्यां, भूरि - बहुतरं, विश्रुवम् - सर्वा विद्या विशेषेण श्रृणवानि, विश्रुवमिति लिङ्काशिषि । पुनरपि स एव स्तूयते । ब्रह्मणः - सर्ववेदस्य, तद्वेद्यस्य परतत्वस्य च, कोशोसि - त्वयि सर्वे वेदाः वेदवेद्यं ब्रह्म तत्स्वरूपरूपगुणविभूत्यादिकंच सर्वं रत्न मंजूषिकायां निधिरिव निहितमिति यावत् । मेधया - दिव्यज्ञानेन, पिहितः - आच्छादितः, ज्ञानविशेषदर्शनीयस्वरूपत्वात् तज्ज्ञानरहि

हितः श्रुतंमेगोपाय, आवहन्तीवितन्वाना ॥१॥
कुर्वाणाचीरंमात्मनः, वासांसिममगावश्च, अन्न
पानेचंसर्वदा, ततोमेश्रियमावह, लोमशांपशुभिः

सानां दुर्मेधोसीति यावत । एत दुभयम प्यन्यत्र समानम् । भग वानपि वेदानां तद्वेद्यानामपि कोशभूतः मंजूषा सदृक्षः, मेधया पिहितः• ज्ञानेन पूरितः । तथा "यत्र विश्वं भवत्येकनीळं" "य स्सर्वज्ञ स्सर्ववित" इत्यादि च । श्रुतं मे गोपाय - श्रुतं - मम अधीतं, सकलां विद्यां, गोपाय – रक्ष, मम परविद्या मुत्पाद्यास्कन्नांकृत्वा सुसमृद्धा मवि शीर्णां कुर्विति यावत ।

( आवहन्तीत्यादि) विद्यांगत्वेन वृष्टिजननहोमाग विनियुज्यते । तत्रावहन्तीति प्रथमा षट्पदा जगती, द्वितीया पंचपदा, तस्मिन्निति त्रिपदा गायत्री,यथाप इत्यवशिष्टं यजुरिति। प्रथमया जगत्या श्री प्रार्थ्यते। आवहन्ती - आगमयन्ती, उत्पादयन्ती, वितन्वाना-विस्तारयन्ती । कुर्वाणाचीरमात्मनः – आगमय्य विस्तार्यच, आत्मनः - मम, चीरं - दीर्घकालं, कुर्वाणा-लब्धानि सर्वा ण्यविनश्यानि स्थापयन्ती, व्यत्ययेन दीर्घत्वम् । यद्वा - अचीरं - द्रुतं, कुर्वाणा । कानि पुनस्तानीत्यत्राह – (वासांसीत्यादि ) विचित्राणि वस्त्राणि बहु प्रकारा गावश्च । विभक्ति व्यत्ययश्छान्दसः । अन्नपाने च सर्वदा - सर्वप्रकार मदनीयं स्वादुतमं पानीयंच, सर्वदा, आवहन्ती वितन्वाना चिरं कुर्वाणा या श्री. तां, श्रियं, सर्वदा, मम, आवह- आगमय । पुनरपि तेव विशेष्यते-लोमशां क्षेत्र पुत्र दासी दासादि बहुद्रव्यवतीं श्रियम् , पशुभिः – गो महिषाजा- दिभिस्सह, ममावहेति । स्वाहाशब्दः – त्यागवचनः होमोविनियुज्यते ।

स्सहस्वाहा, आमायन्तुब्रह्मचारिणस्स्वाहा, यशो
जनेसानिस्वाहा, श्रेयान्वस्यसोऽसानिस्वाहा, तंत्वा
भगप्रविशानिस्वाहा, समाभगप्रविशस्वाहा ॥ २॥
तस्मिन्थ्सहस्रशाखे, निभगाहंत्वयिमृजेस्वाहा,

अत्र च भगवते प्रतिपाद्यं हविरात्म पत्रपुष्पादिकम् । अथ श्रुतविद्या गुरुचर्यं तत्प्रवचनाय शिष्यान् प्रार्थयते – आमायन्तु ब्रह्मचारिणस्स्वाहा – भगवद्ज्ञानाय ब्रह्मचर्यादिकं व्रतं धारयन्तः शुश्रूषणपरा हेअन्तेवासिनः! माआयन्तु – आगच्छन्तु, आच.र्यकर्मेस्यादिति यावत् । किञ्च – यशोजनेसानिस्वाहा-जने – सर्वेषु जनेषु मध्ये, अहं, यशोसानि – यशस्वीभूयासम् । लुप्तमत्वर्थीयोयं प्रयोगः । अथवा – यशोजने – यशस्विजने, भगवद्भजनयजनकीर्तनादि कल्याणाकरेजने, अहं ग्राह्यो भवेयम् । किञ्च – श्रेयान् वस्यसोसानिस्वाहा - वस्यसः- वसीयसः, वसुमत्तमात्, परमज्ञानभाजनात्, प्रशस्योभवानि, छान्दस ईकारलोपः । किंच – तंत्वाभगप्रविशानि स्वाहा- हे भग- भजनीये हे श्रीः! अथवा ऐश्वर्यादिसमृद्ध श्रियःपते ! तं त्वा, अहं, प्रविशानि– भोक्तृत्वेन प्राप्नवानि, त्वां प्राप्य त्वत्परिचरणरूप मशेषं कैंकर्यं लभेयेति यावत् । किंच – समाभगप्रविशस्वाहा - हे भगवन् पुरुषोत्तम! त्वमपि मां प्रविश - दण्डकारण्यवासिन श्शरभंगादिमुनिवर्यानिव त्व मेव मां स्वीकुर्विति । तस्मिन् थ्सहस्रशाखे निभगाहंत्वयिमृजेस्वाहा- भग – परमसमृद्धि परमशुद्धि परमदया परमसौहार्दादिनिधे श्रीमन्! तस्मिन् त्वयि, सहस्रशाखे – बहुप्रकारज्ञानशक्त्यादि कल्याण गुणगणरूपशाखानुशाखा विस्तृते त्वयि, अहं, निमृजे - त्वत्प्राप्तिविरोध्य नादिकाल संचितानन्तांहस्तति मार्ज्मि, त्वत्स्मरण कीर्तन यजनादि

यथाऽऽपः प्रवतायंति, यथामासा अहर्जरं, एवं मां

ब्रह्मचारिणः, धातरायंतु सर्वतस्वाहा, प्रतिवेशोसि

प्रमाभाहि प्रमापद्यस्व ॥

वितन्वानाविशस्वाहासप्तच ॥ ४ ॥

इति चतुर्थो ऽनुवाकः ।

---

संक्षालिताशेषपापो भवानि । प्रार्थितार्थं समागमेन द्रढयति (यथापइति ) आपः - वर्षासमये बहूनिजलानि, प्रवता प्रस्रवणेन, निम्नेन देशेन, यथायन्ति - शीघ्रं गच्छन्ति, उपसर्गाच्छन्दसीतिवनिः । यथा मासा अहर्जरं – अहानि जरयती त्यहर्जरः संवत्सरः, तं, यथा, मासाः, यन्ति - गच्छन्ति । एवं मां ब्रह्मचारिणः धात रायन्तु सर्वतस्स्वाहा- हे धातः! सर्वतः, आयन्तु - ब्रह्मचार्यादि शिष्यगणाः सर्वेण प्रकारेणा गच्छन्त्वित । किंच-प्रतिवेशोसि प्रमाभाहि प्रमापद्यस्व- हे भगवन् त्वं, प्रतिवेशोसि-श्रमविलयस्थानं प्रतिवेशः, तदसि-तापत्रयदव दहन दह्यमानानां संसारिणां पथि स्थितं तरुवाप्यादिविश्रमस्थानं भोगस्थान मसि, तस्मात् त्वं मां, प्रभाहि – प्रकर्षेण भातं दीप्तं सर्वलोकविख्यातं कुरु, प्रभाही त्यन्तर्भावितण्यर्थो द्रष्टव्यः । यद्वा-मां, प्रभाहि - प्रकाशय, तदर्थं,मा- मांप्रपद्यस्व-प्रकर्षेण माङ्कृताध्यवसायो भव-कदाचिदपि रक्षणे मां न विमुंचेति यावत । यद्वा - प्रमापद्यस्वच - मां रसासिद्धमिव लोहं त्वन्मयं त्वदात्मानं कुर्वित्यर्थः । श्रीकामोस्मिन् विद्याप्रकरणे ऽभिधीयमानो धनार्थी, धनं च कर्मार्थम्, कर्म च उपात्तदुरितक्षयार्थं, तत्क्षयेहि विद्या प्रकाशते, तथाच स्मृतिः, “ ज्ञान मुत्पद्यते पुंसां क्षया त्पापस्य कर्मणः । यथादर्शतलप्रख्ये पश्यत्यात्मान मात्मनि ”इति ।

इति श्री कूर नारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

सांहितीषूपनिषत्सु

चतुर्थो ऽनुवाकः ॥ ४ ॥

---

भूर्भुवस्सुवरितिवाएतास्तिस्रोव्याहृतयः,. तासां महस्मैताचतुर्थी, माहाचमस्यः प्रवेदयते, महइतिं, तद्ब्रह्मं, सआत्मा, अङ्गान्यन्यादेवताः, भूरितिवा

एवं विद्यांगा न्युपदिश्य तत्प्रतिपाद्यस्य वक्ष्यमाणस्य परोपासन स्यांगभूतं व्याहृत्युपासनं प्रथम मुपदिशति ( भूर्भुवस्सुवरित्यादि ) आभिः ब्रह्मव्याह्रियत इति व्याहृतयः-भूरादय श्शब्दाः, तद्वाच्यो भूरा दिर्वा, एता स्तिस्रो व्याहृतयः प्रसिद्धाः ब्रह्मशरीरभूताः ब्रह्मप्रति पादिका वा, भवन्त्यस्मिन् सर्वाणि भूतानीति भूः - अधिकरणे क्विप् , अवकाशप्रदानेन सर्वं पदार्थजातं भावयतीति भुवः, अन्तर्भावि तण्यर्थो वेदितव्यः। अगुनि गुणाभाव श्छान्दसः। सुष्ठु शोभनं वर णीयं प्रावणीयं - सुवः, अस्मिन् सुष्ठु वरणीयमिति वा, बहुळग्रहणा दकर्तर्यपि विच्। यद्वा - आदित्याद्युपवद्धाः लोकाः लोकाधिष्ठान देवता वा। (माहाचमस्य इति ) गर्गादिलक्षणो यञ्। स पुनः केयपेक्षायां माह ( मह इति ) महयति विश्वं, महीयते विश्व मनेनेति वा - महः। औणादिको सुन् प्रत्ययः। अनया चतुर्थ्या व्याहृत्या अंगिभूतं परं ब्रह्म प्रतिपाद्यते, अन्याभि र्व्याहृतिभिः तच्छरीर भूताः। तदेतदाह ( तद्ब्रह्म, स आत्मा, अंगान्यन्या देवता इति ) अनया चतुर्थ्या यत्प्रतिपादितं, तत्परं ब्रह्म - बृहत्त्वबृंहणत्वगुणयोगि, स आत्मा - आप्नोतीत्यात्मा, इतराणि समस्तानि तत्वानि अव्यवधानेन व्याप्य धारणपोषणनियमनादिकं कुर्वन् स्वामित्वेनावस्थित इति यावत। यथैकस्य शरीरस्य शरीरी,- तथा सर्वेषां भूतानां आत्मा। तथा- "य आत्मनि तिष्ठ" न्नित्यादि। ( अंगान्यन्या देवता इति ) अन्या ब्रह्मरुद्रादय स्सर्वा देवताः, अंगानि - तच्छरीरत्वेन शेषभूतानीति न्यायाद्यनपेक्षं कण्ठोक्तं। इदानीं एकैकां चतुर्धा भूराद्यधिकरणत्वेन

अयंलोकः, भुवइत्यंतरिक्षं, सुवरित्यसौलोकः ॥१॥
महइत्यादित्यः, आदित्येनवाव सर्वेलोकामहीयंते,
भूरितिवाअग्निः, भुवइतिवायुः, सुवरित्यादित्यः, मह
इतिचंद्रमाः, चंद्रमसावावसर्वाणिज्योतींषिमहीयंते,
भूरितिवाऋचः,भुवइतिसामानि,सुवरितियजूंषि॥२॥

उपासनीया मुपदिशति ! भूरिति वा अयं लोकः – भूतोत्पत्तिहेतुत्वात् · भूरिति · पृथ्वीलोक उच्यते । अवकाशादिदानेन भूतानि भावयतीति भुव इत्यन्तरिक्षलोकः । परमसुख मस्मिन् प्राप्यत इति सुवरिति · स्वर्गलोक उच्यते ।

महीयते विश्वमनेनेति – मह इति – आदित्यः-आदित्यान्तर्वर्ती नारायणः प्रतिपाद्यते । दित्यदित्यादीत्यादिना अदित्यशब्दात् ण्यः । त देवत स्वयमेव निर्वक्ति ( आदित्येनवावसर्वे लोका महीयन्तइति ) महीयन्ते – धारणपोषणभोग्यप्रदानेन उपक्रियन्ते । महीयन्तइति कण्डूवादियगन्तः । (भूरिति वा अग्निरित्यादि) अग्नेरूष्मणातप्ते अत एव स्विन्ने शरीरे भूतानि भवन्ति अतोभूरिति बोद्धव्यं । भूतानि धारणा दिनाभावयतीति वायुः भुव इत्युपास्यः । भूतानि आलोकादिदानेन शोभनं भावयतीति - सुवरित्यादित्यो बोद्धव्यः । महसा पूजितेनामृतरूपेण तेजसा सर्वाणि ज्योतींषि उपक्रियन्त इति चन्द्रमा मह इत्युपास्यः । (भूरिति वा ऋच इत्यादि) ऋग्भि र्यागसाधनभूताभिः यज्ञद्वारेण भूतानि भवन्तीति · भूरिति · ऋच. उच्यन्ते । साम्नाच भूतानि भाव्यन्तइति- भुवइति - सामान्युपास्यानि । यजुर्भि र्होमकर्मविधानरूपै स्सर्वाणि सुष्ठु रक्ष्यन्तइति - सुवरिति · यजूंषि प्रतिपाद्यन्ते ।

महइतिब्रह्म, ब्रह्मणावावसर्वेवेदामहीयंते, भूरिति वैप्राणः, भुवइत्यपानः, सुवरितिव्यानः, मह इत्यन्नं, अन्नेनवावसर्वेप्राणामहीयंते, तावाएताश्चत स्रश्चतुर्धा, चतस्रश्चतस्रोव्याहृतयः, तायोवेद ॥६॥ सवेदब्रह्म, सर्वेस्मैदेवाबलिमावहंति ॥ ६ ॥

असौलोकोयजूंषिवेदद्धेच ॥

इति पञ्चमो ऽनुवाकः ।

ब्रह्मणा - प्रणवेन कारणभूतेन, सर्वे वेदाः, महीयन्ते उपक्रियन्तइति महइति ब्रह्मोपास्यम् । ( भूरितिवैप्राणइति ) प्राणोहि वायु र्भूतानि भावयतीति - भूरिति - प्राणउपास्यः । अशितपीत निर्हारादिना अपानोपि तथेति - भुवइति - अपानो ज्ञेयः । अन्नपानादिकं सर्वेषु शरीरेषु व्यापाद्य सुष्ठु अवतीति - सुवरिति - व्यानो विज्ञेयः । महइत्यन्नं । स्वयमेव तस्य निर्वचनप्रकारमाह – (अन्नेनवावसर्वे प्राणामहीयन्त इति ) प्राणाः – प्राणिनः, महीयन्ते – उपक्रियन्तइति यावत् । (ता वा एता इत्यादि ) भूराद्या एता श्चतस्रश्चतुर्धा, उपासनाधिकरणभेदेन च तस्रश्चतस्रष्षोडशधा प्रतिपादिताः याः, ता योवेद - उपास्ते, स वेद ब्रह्म-परं ब्रह्म साक्षात कुर्यात, तत्साक्षात्कारस्योपायत्वा दस्योपासनस्य । किंच - सर्वेस्मै देवा बलि मावहन्ति - अस्मै - व्याहृत्युपासकाय, सर्वे देवा इन्द्रादयः, बलिं -पूजां, आहरन्ति - आभिमुख्येन प्रापयन्ति - देवादिभिस्सर्वै राराध्योभवतीत्यर्थः ।

इति श्री कूर नारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

सांहितीषूपनिषत्सु

पञ्चमो ऽनुवाकः ॥ ५ ॥

सयएषोंतर्हृदय आकाशः, तस्मिन्नयं पुरुषोमनो मयः, अमृतोहिरण्मयः, अन्तरेणतालुके, यएष स्तनइवावलम्बते, सेंद्रयोनिः, यत्रासौ केशांतो विवर्तते, व्यपोह्यशीर्षकपाले, भूरित्यग्नौप्रतितिष्ठति, भुवइतिवायौ ॥ १ ॥

सुवरित्यादित्ये, महइतिब्रह्मणि, आप्नोतिस्वाराज्यं,

पूर्वोक्तव्याहृत्युपास्तिनिष्ठस्य देवयानमार्गेण भगवत्प्राप्तिप्रकारउच्यते "स य एष" इत्यादिना। अन्तर्हृदये- हृदयमध्ये, य एषः, आकाशः- अवकाशः । स एष इति तस्य प्रसिद्धतां सूचयति ः। तस्मिन्नयं-पुरुषो मनोमयः- योगशुद्धेनमनसाग्राह्यः अयं पुरुषः- जीवात्मा, वर्तते, स्वानुभवसिद्धत्वा दयमिति निर्दिश्यते। अमृतोहिरण्मयः-अमृतः जननमरणादि धर्मरहितः, हिरण्मयः- हित रमणीय रूपइत्यर्थः । व्याहृत्युपासकस्य एवं वर्तमानस्य निर्गमनद्वार मुपासनांगत्वेनोपदिशति- अन्तरेणतालुके- तालुमध्ये । य एष स्तनइवावलम्बते- स्तनाकारोवयवविशेषो योस्ति । सेन्द्रयोनिः- सः, इन्द्रस्य जीवात्मनः, शरीरेश्वरस्यवा, योनिः- निष्क्रमणस्थानम् । ययायोन्या निर्गच्छति सैव विशेष्यत उपरिष्टात्। यत्रासौ केशान्तोविवर्तते-यत्र-यस्यां, केशान्तः-तदाख्यः स्थानविशेषः, विवर्तते, क्षेत्रज्ञ स्तयानिष्क्रम्य, शीर्षकपाले-दक्षिणोत्तरे, व्यपोह्य- विभिद्य, ततः, भूरित्यग्नौ प्रतितिष्ठति- भूरित्युपासनेन, अग्नौ- अग्निलोकं, सगच्छति, भुवइत्युपासनेन वायुलोकम् ।

सुवरित्यादित्ये- आदित्यलोकं, मह इति ब्रह्मणि-ब्रह्मलोकं, परम व्योम गच्छति । तत्र गत्वा, आप्नोतिस्वाराज्यं- अकर्मवश्यत्वं भगवदैं-

आप्नोतिमनसस्पतिं, वाक्पतिश्चक्षुष्पतिः, श्रोत्रप
तिर्विज्ञानपतिः, एतत्ततोभवति, आकाशशरीरंब्रह्म,
सत्यात्मंप्राणारामंमनआनन्दं,शांतिसमृद्धममृतं ।२।

कर्य प्रतिबन्धकानिवृत्तिरूपं, आप्नोति मनसस्पतिं-सर्वनियामकंपुरुषोत्तमं प्राप्नोति । अथवा - मनःशब्देन मनोधिष्ठाता जीवात्मा उच्यते, स्व स्वामिनं प्राप्नोतीति यावत । एवं भगवन्तं प्राप्तः, वाक्पतिर्भवति - वागिन्द्रियसाध्यस्य कृत्स्नशब्दराशे स्तज्जनितसुखस्यवा नियामको भवति । चक्षुष्पतिश्चभवति- चक्षुरिन्द्रियसाध्यस्यापितथा । श्रोत्रपतिश्च पूर्ववत् । विज्ञानपतिश्चभवति - करतळामलकवत् सदा स्व ज्ञानेन सर्व मनुसन्दधाति । एत त्ततोभवति- ततः- भगवत्प्राप्त्यनन्तरं, एतद्भवति - एतदादिकं सर्वं सम्पद्यते । किं तत ? आकाश शरीरं ब्रह्मभवति - ब्रह्मात्मकोभवति , ब्रह्मणआकाशशरीरत्वं दिव्यस्यभगवतो रूपस्या काशवदासमन्तात् काशमानत्व सूक्ष्मत्व ज्ञानाद्यनाच्छादकत्वनित्यत्व सर्वेतरावकाशप्रदत्वादिना । पुनरपि ब्रह्मैव विशेष्यते -सत्यात्म-सत्यानां- चेतनाचेतनानां सर्वेषा-मात्मभूतं, अथवा सत्यात्म-सत्यं- मूर्तामूर्तमपि, आत्मास्वरूपं यस्य तदिदंसत्यात्म, प्राणारामं- प्राणेषु- आरमणं- आक्रीडा यस्य तत, प्राणारामं, प्राणानां वा आरामो यस्मिन् तत् प्राणारामं, अथवा प्राणएषा रमस्वरूपमेव, आरामः- उद्यानं, यस्यत त्प्राणारामं- स्वानन्दतृप्तमित्यर्थः । मनआनन्दं- आनन्दभूतं- आनन्दकृत् सुखकृदेव यस्यमनस्त न्मनआनन्दं, यद्वा- मनसैव आनन्दो यस्य त न्मनआनन्दं, नेन्द्रियान्तरा पेक्षानन्दमित्यर्थः । अनेन मुक्तात्मनो मीश्वरस्यच दिव्यरूपवत्त्वं निरवधिकानन्दत्वं मनो- विशेषवत्त्वं, इत्याद्यर्थजातं न्यायानपेक्षं श्रुत्यैवोक्तमिति विदितं । शांतिसमृद्धं - ऐश्वर्यादिनिमित्तोद्धर्षाभावः शान्तिः, तया समृद्धं, तथा "शान्तोदित विज्ञानाये"ति मूलतन्त्रे । यद्वा शांतिः- उपशमः

इति प्राचीनयोग्योपास्व ॥ वायावमृतमेकंच ॥

इति षष्ठोऽनुवाकः ।

पृथिव्यन्तरिक्षंद्यौर्दिशोवांतरदिशाः, अग्निर्वायु
रादित्य श्चन्द्रमा नक्षत्राणि, आप ओषधयो वन

शांतिसंस्थो समृद्धंच शांतिसमृद्धं, शांत्यावासमृद्धवत् तद्रूपलक्ष्यत इति शांतिसमृद्धं, अमृतं- शरीरादिविशिष्टनिष्ठ मरणादिरहितं । व्याहृत्यु पासकस्य एवम्भूतस्य परस्य ब्रह्मण श्शरीरत्वेना नन्यथासिद्धंहि शेषत्वं भवति । इति प्राचीनयोग्योपास्व - इत्याचार्यश्शिष्यमनुशास्ति, हेमा- चीनयोग्य ! "तस्यापत्यं" इतिगर्गादिलक्षणोयञ् । अथवा - प्राचीनैः पूर्वोक्तैः, विद्यांगैः भगवदुपासन योग्यतामापन्न हेशिष्य ! त्वं पूर्वोक्त प्रकारेण उपास्वेति ॥ ६ ॥

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

सांहितीषूपनिषत्सु

षष्ठो ऽनुवाकः ॥ ६ ॥

इदानीं ध्यानविशेषं ज्ञानांगत्वेनोपदिशति (पृथिव्यन्तरिक्षमित्यादि) - पृथिव्यादिपंचकं अग्न्यादिपंचकं अद्भ्यादिपंचकमिति त्रयःपंचकाः, अधि भूतं-शरीरावयवभूते ष्वधिभवन्ति । एतानि भूतानि भूतपरिणामाश्च त्रयः पंचकाः । प्राणादयः पंच, चक्षुरादयः पंच, चर्मादयः पंच, एते त्रयः पंच काः, अध्यात्मं- आत्मनि शरीरे भवन्ति । पृथिव्यन्तरिक्षं द्यौरिति लोकान्

स्पर्शय आकाश आत्मा, इत्यधिभूतं, अथाध्यात्मं, प्राणो व्यानो पान उदान स्समानः, चक्षुश्श्रोत्रं मनोवाक्त्वक् , चर्ममाँसँस्नावास्थिमज्जा, एतदाधि विधायऋषिरवोचत् , पा ङ्क्तंवाइदँसर्वं ॥ १ ॥ पाङ्क्तेनैवपाङ्क्तँस्पृणोतीति ॥ सर्वमेकंच, ॥

इति सप्तमोऽनुवाकः ।

---

प्राच्यादयो दिशः, अग्न्यादयः पृथिव्यादीना मधिदेवताः । आकाश शब्देनाकाशगुण श्शब्दो विवक्षितः । प्राणः- मुखनासिकानिष्क्रमणो वायुः, व्यानो बलकृ दग्निदीपनादिहेतुः, अपानो धोगति श्शब्दकर्मा, उदानश्छर्द नादिहेतुः, समानः आहारादीनां सर्वे ष्वंगेषु सन्नेता । रूपग्रहणहेतुः चक्षुः, शब्दग्रहणहेतुश्श्रोत्रं, संकल्पहेतु मनः, रसग्रहणहेतु र्वाक् , रसना घ्राणस्याप्युपलक्षणं, गन्धग्रहणहेतु र्घ्राणः, स्पर्शग्रहणहेतु स्त्वक् । स्नावा- बन्धनी सिरा, मज्जा अस्थ्यन्तरस्थितं जलं । एत दधिविधाय एतदुपात्तं ज्ञानं, अधिविधाय-उपासनार्थ मुक्त्वा,पुनः ऋषि र्वेदात्मा, इदं सर्वं जगत् , पाङ्क्तं- पङ्क्ते रागत मवोचत् , न चतुर्भ्यः न षड्भ्यः, यस्मादेवं, तस्मा दनेन पाङ्क्तेन यथोक्तलक्षण पंचषट्केनानु संहितेन पाङ्क्तेन, पाङ्क्तं विश्वं, स्पृणोति- व्याप्नोति, पालयति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

सांहितीषूपनिषत्सु

सप्तमो ऽनुवाकः ॥ ७ ॥

---

ओमितिब्रह्म, ओमितीदँसर्वं, ओमित्येतदनुकृ
तिह्स्मवा अप्योश्रावयेत्याश्रावयन्ति, ओमितिसा
मानिगायंति, ओँशोमितिशस्त्राणिशँसंति, ओमित्य
ध्वर्युःप्रतिगरंप्रतिगृणाति, ओमितिब्रह्माप्रसौति ,
ओमित्यग्निहोत्रमनुजानाति, ओमितिब्राह्मणः प्रव

अथेदानीं ओमितिब्रह्मेत्यनेना ष्टमेनानुवाकेन प्रणवस्य साक्षाद्ब्रह्म वाचकत्वं प्रतिपादयता तस्य ब्रह्मसादृश्यं प्रतिपाद्यते ( ओमिति ब्रह्मेति ) यदेतदोमित्येतदक्षरं, तत् ब्रह्म-बृहत्त्वबृंहणत्वयोगि, स्वयं ब्रह्माभिधा नत्वा द्बृहत् , सर्वेषां शब्दानां स्वसम्बन्धेन बृंहणत्वात् बृंहणं, तस्मा दोमित्येतदक्षरं ब्रह्म । ओमितीदँ सर्वं - इदं चेतनाचेतनात्मकं तत्तच्छब्दवाच्यं जगत् , ओमित्येतस्याक्षरस्य कार्यभूतै शब्दैः प्रति पाद्यमान मोंकारएव । ओमित्येतदनुकृतिह्स्म वै - ओमित्येदक्षरं विधिनिषेधात्मकस्य सर्वस्य शब्दस्य अनुकृति - अनुकरणम् । तथा सर्वै श्शब्दै रेव कुरु एवं मा कुर्वित्युक्तं ओमिति प्रतिवदति । ह स्म वै इति पदत्रयेणास्मिन्नर्थे लोकवेदयोः प्रसिद्धि र्बोध्यते। अप्योश्रावयेत्याश्रावयन्ति-यज्ञेषु ऋत्विजः। तथा- ओमितिसामानि गायन्ति- ओमित्याश्राव्य-सामानि गायन्ति। तथा- ओँशोमिति शस्त्राणिशँ सन्ति- शस्त्र शंसनपरा ओमिति शस्त्राणि शंसन्ति । शकारोपजनो मंगळार्थः । तथा - ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति- अध्वर्युः- प्रति गरं- प्रत्युच्चारणं, ओमिति प्रतिगृणाति- प्रतिब्रूते । ओमिति ब्रह्मा प्रसौति- ऋत्विक्प्रधानभूतोब्रह्माच, ओमिति प्रसौति - इतरान् ऋत्विजः ओमि त्यनुमन्यते । ओमित्यग्निहोत्रमनुजानाति - अग्निहोत्री आग्निहोत्रं ओमित्यनुजानाति । किञ्च - ओमितिब्राह्मणः प्रवक्ष्यन्नाह

क्ष्यन्नाह ब्रह्मोपाप्नुवानीति, ब्रह्मैवोपाप्नोति ॥ ओं दशं ॥

इत्यष्टमोऽनुवाकः ।

ऋतंचस्वाध्यायप्रवचनेच, सत्यंचस्वाध्यायप्रवचनेच, तपश्चस्वाध्यायप्रवचनेच, दमश्चस्वाध्यायप्रवचनेच, शमश्चस्वाध्यायप्रवचनेच, अग्नयश्चस्वाध्यायप्रवचनेच, अग्निहोत्रंचस्वाध्यायप्रवचनेच,

ब्रह्मोपाप्नुवानीति- ओमिति ब्रह्मवक्ष्यमाणः ब्राह्मणः अहंवेदं प्राप्नुवानीति एतमर्थमुपक्रमे ओमित्याह । ब्रह्मैवोपाप्नोति- एवं प्रणवयज्ञं सैवमनुतिष्ठन्, ब्रह्मैवोपाप्नोति- पर ब्रह्मपाप्नोतीत्यर्थः ॥

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
सांहितीषूपनिषत्सु
अष्टमो नुवाकः ॥ ८ ॥

विद्योत्पत्तये यज्ञदानतपःप्रभृतीन्यनुष्ठेयानीति " यज्ञेनदानेनतपसानाशकेन " " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " इत्यादिभिः प्रतिपादितानि इदानीं विद्यांगत्वेनानुष्ठेयानि प्रतिपाद्यन्ते ॥ ऋतश्च सूनृतावाणीकविभिः परिकीर्तिता । स्वाध्यायः- अध्ययनम् । प्रवचनं - अध्यापनं, ब्रह्मयज्ञोवा । एतानि ऋतादीनि अनुष्ठेयानीति वाक्यशेषः । सत्यं च - समदर्शनं, सत्यवदनंवा । तपः - कृच्छ्रादिविहितकर्मानुष्ठानं, यद्वा - " कामत्यागस्तपस्स्मृत " इति श्रीभागवते । दमः - बाह्यकरणोपशमः । यद्वा - ' शमो मन्निष्ठताबुद्धेः दमइन्द्रियसंयमः ' इति श्रीभागवते । अग्नयः- आधानस्था आहवनीयादयः । अग्निहोत्रंनाम

अतिथयश्चस्वाध्यायप्रवचनेच, मानुषंचस्वाध्याय प्रवचनेच, प्रजाचस्वाध्यायप्रवचनेच ॥ १ ॥

प्रजनश्चस्वाध्यायप्रवचनेच, प्रजातिश्चस्वाध्याय प्रवचनेच, सत्यमितिसत्यवचाराथीतरः, तपइतित पोनित्यःपौरुशिष्टिः, स्वाध्यायप्रवचनेएवेतिनाकोमौद्गल्यः, तद्धितपस्तद्धितपः॥ प्रजाचस्वाध्यायप्रवचनेचषट्च ॥ इति नवमो ऽनुवाकः ।

कर्मनामधेयं, अग्निहोत्रंच होतव्यमिति । अतिथयः ब्राह्मणादयः पूज्याः । मानुषं मनुष्यव्यापारसाध्यं भगवत्प्रणाम स्तवन यजनभजनकीर्तनादिकं लौकिका स्वंव्यवहाराश्च, तच्च यथाप्राप्तमनुष्ठेयं । प्रजाच स्वाध्यायप्रवचनेच स्वदेशान् दारानुपेत्य तेषु पुत्राश्चोत्पाद्या इति ' प्रजननं वै प्रतिष्ठा ' ' साधु प्रजाया स्तन्तुं तन्वान ' इत्यादिषूक्तम् ॥१॥

प्रजनः – प्रजननं, ऋतौ भार्यागमन मित्यर्थः । यद्वा– प्रजननं– भूयो भूयो जननं, पौत्राश्चोत्पाद्या इति " पौत्रेणानन्त्य मश्नुते " इत्यादिश्रुतिसिद्धम् । प्रजाति र्नप्त्रादि, तद्दर्शनमपि कार्य मित्यर्थः । सत्यमिति सत्यवचाराथीतरः – रथीतरस्यापत्यं राथीतरः ऋषिः, सत्य मेव विद्यांगत्वे पर्याप्तं साधनं, नार्थ स्स्वाध्यायप्रवचनाभ्या मित्याह । तप इति - कर्तव्यमिति, तपो नित्यः - तपस्वि नित्यः, पुरुशिष्टस्यापत्यं पौरुशिष्टिः आचार्यो मन्यते । स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नाम्ना मुद्गलस्यापत्यं मौद्गल्यः आचार्यो मन्यते । तद्धितप स्तद्धितप इति – स्वाध्यायप्रवचनाभ्यां 'परन्तपो नास्तीति । अत्र सर्ववादरार्थ पुन श्श्रुतिः । प्राधान्यख्यापनार्थेति केचित ॥

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने सांहितीषूपनिषत्सु नवमोऽनुवाकः ॥ ९ ॥

अहंवृक्षस्येरेरिवा, कीर्तिःपृष्ठंगिरेरिव, ऊर्ध्वपवि-त्रोवाजिनीवस्वमृतमस्मि, द्रविणँसवर्चसं, सुमेधा अमृतोक्षितः, इति त्रिशंकोर्वेदानुवचनं॥ अहँषट् ॥

इति दशमो ऽनुवाकः ।

अहं वृक्षस्येति विद्यासमृद्ध्यर्थं जप्तव्यो मन्त्रः । इयं षट्पदा जगती । अहं, वृक्षस्य – व्रश्चनीयस्याहंकारमहावृक्षस्य । रेरिवा - भृशं क्षपयिता । अस्यात्यन्तोच्छेदेन परस्मिन् ब्रह्मणि नारायणे परां भक्तिं प्राप्तः । अत एव – कीर्तिः - कीर्तिमान् । मत्वर्थीयस्य लोप श्छान्दसः । इकारो वा मत्वर्थीयः । अथवा - कीर्तिः कीर्तनीय स्सर्वै र्वेदैश्च । यद्वा - यथा कीर्तिः केनचि दाच्छा दयितुं न शक्यते एव मह महाप्रकाशवानिति । तत्र दृष्टान्त माह - पृष्ठं गिरे रिव - गिरेः पर्वतस्य, पृष्ठं यथा वस्त्रेणाच्छादयितुं न शक्यते एवं भगवत्प्रसादा दह मस्मि सम्पन्नः । ऊर्ध्वं पवित्रः - ऊर्ध्वं सर्वस्मा दुत्कृष्टं पवित्र सर्वशुद्धिहेतुभूतं परं ब्रह्म प्राप्तवा नस्मि, तस्मा दहमपि सर्वस्मा दुत्कृष्ट स्सर्वशोधक इति यावत् । वाजिनीव स्वमृतमस्मि - वाजिनी – नित्यविभूतिः तस्मिन्निव वर्त मानोऽस्मि । अत एव - स्वमृत मस्मि - नित्यमुक्तव त्परमामृतभोक्ता ऽस्मि । द्रविणँ सवर्चसं - द्रविणं वरिष्ठं धनं, सवर्चसं- महाबल मक्षयं, तदेवाह मस्मि । अत एव - अहं सुमेधाः शोभनव्यवसाय वानस्मि । अमृतः जन्ममरणादिदुरितदूरः, अक्षितः- अनपक्षयः । अथवा-अमृतत्वहेतुना भगवदानन्देन सिक्तः । इति त्रिशंको र्वेदानुवचनं- त्रिशंकोः क्षत्रियमहर्षेः, वेदानुवचनं - उपासनेमन्त्रकथनं । इदं मन्त्रं उपासनांगं सोऽन्ववोचत् । ऋषिनिर्देशो मन्त्रस्य माहात्म्य सूचनार्थः ॥

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

सांहितीषूपनिषत्सु

दशमो ऽनुवाकः ॥ १० ॥

वेदमनूच्याचार्योंतेवासिनमनुशास्ति । सत्यंवद, धर्मंचर, स्वाध्यायान्माप्रमदः, आचार्यायप्रियंधन माहृत्यप्रजातन्तुं माव्यवच्छेत्सीः, सत्यान्नप्रमदितव्यं, धर्मान्नप्रमदितव्यं, कुशलान्नप्रमदितव्यं, भूत्यै नप्रमदितव्यं, स्वाध्यायप्रवचनाभ्यां नप्रमदितव्यं।

वेद मनूच्येत्याद्यनुशासनार्थोनुवाकः । प्रमाणान्तरविद्धानामपि सत्यवचनादीनां उपनिषद्विद्यानुवचनानन्तरं फलाधिक्यार्थ मनुवचनम् । वेद मनूच्याचार्योन्तेवासिन मनुशास्ति-अनूच्य - अध्याप्य, अन्तेवासिनं-शिष्यं, आचार्यः, अनुशास्ति । कथ मनुशासनं? एवं । सत्यं वद-यथा दृष्टार्थमनहितवचनं सत्यं, सदा त्वया तदेव वक्तव्यम् । धर्मं चर- श्रुतिस्मृत्युदितं वर्णाश्रमानियतं धर्म मनुतिष्ठ । स्वाध्याया न्मा प्रमदः - स्वाध्यायो ऽध्येतव्य इति विहिताद नित्यस्वाध्यायात् , मा प्रमदः - प्रमादं माकार्षीः । आचार्याय, प्रियं धनं -विद्यानुकूलदक्षिणां, आहृत्य, प्रजातन्तुं-प्रजासन्तानं, माव्यवच्छेत्सीः- विच्छिन्नं माकार्षीः । विद्या मधिगम्य त्वरितेन न प्रव्रज्या कार्या, सन्तानार्थं निवेशनं तावत कर्तव्य मित्यर्थः । पुनरपि प्राधान्यख्यापनार्थं माह । सत्यान्नप्रमदितव्यं - सत्याच्च प्रमदनं मनृतप्रसंगः, प्रमादशब्द सामर्थ्यात् विस्मृत्यापि अनृतं न वक्तव्य मित्यर्थः । अन्यथा असत्यवदनप्रतिषेध एवस्यात् । धर्मान्नप्रमदितव्यं - धर्मशब्दस्य अनुष्ठेयविषयत्वात अनन्नुष्ठानं प्रमादः, स न कर्तव्यः, अनुष्ठेयएव । कुशलात् - आत्मरक्षणार्थं कर्मणः, नप्रमादितव्यं । भूतिः-विभूतिः, तस्यै -भूत्यै, भूत्यर्थात् मंगळयुक्तात् कर्मणः, नप्रमदितव्यं । यद्वा - भूतिः ऐश्वर्यम्, तस्यै, न प्रमदितव्यं । स्वाध्याय प्रवचनाभ्यान्न प्रमदितव्यं - तेहिनियमेन कर्तव्ये इत्यर्थः ।

देवपितृकार्याभ्यां नप्रमदितव्यं, मातृदेवोभव, पितृदेवोभव, आचार्यदेवोभव, अतिथिदेवोभव, यान्यनवद्यानिकर्माणि, तानिसेवितव्यानि, नोइतराणि, यान्यस्माकँसुचरितानि, तानित्वयोपास्यानि। नोइतराणि, येकेचास्मच्छ्रेयाँसोब्राह्मणाः, तेषां त्वयासनेनप्रश्वसितव्यं, श्रद्धयादेयं, अश्रद्धयादेयं,

देवपितृ कार्याभ्यां नप्रमदितव्यं - देवयज्ञ पितृयज्ञाभ्यां नप्रमदितव्यम् । (मातृदेवोभव पितृदेवोभव आचार्यदेवोभव अतिथिदेवोभवेति ) मात्रादीनां देववत्पूजार्थं मातृदेवोभवेत्याद्यनुशासनं । देवतावदुपास्यावा ते इत्यर्थः । यान्यनवद्यानिकर्माणि तानिसेवितव्यानि - अनवद्यानि अनिन्दितानि अनपवदनीयानि शिष्टाचारलक्षणानि यानिकर्माणि, तानि कर्तव्याणि त्वया । नोइतराणि- सावद्यानि न सेवितव्यानि । यान्यस्माकँसुचरितानि- शोभनचरितानि आम्नायाविरुद्धानि, तान्येवत्वयोपास्यानि-अदृष्टार्थानि यत्नताश्शिक्षणीयानि ।

नोइतराणि - विपरीतानि नकर्तव्यानि । ततो ऽप्यन्यं हितं भ्रमः ( येकेचास्मदित्यादि ) येकेच - अविशेषिता आचार्यत्वा दिधर्मैः, अस्मत - अस्मत्तः, श्रेयांसः - प्रशस्यतराः, तेच ब्राह्मणाः नक्ष त्रियादयः । तेषां, आसनेन-आसनदानादिना, त्वया, प्रश्वसितव्यं-प्रश्व सनं प्रश्वासः श्रमापनयः, तेषां श्रमः त्वया अपनेतव्य इत्यर्थः । यद्वा- तेषां, आसने- आस्थाने गोष्ठ्यां, त्वया, नप्रश्वसितव्यं नविश्रब्धेन त्वया वक्तव्यं, नवाक् प्रगल्भयितव्या । तेषु समुदितेषु प्रश्वासोपि नकर्तव्यः, केवलं तदुक्त सारग्राहिणा भवितव्यमित्यर्थः । किंच- दाने श्रद्धादयो वक्ष्यमाणाः षडेते प्रतिपत्तव्याः । यत् किंचित्- देयं, तत श्रद्धयैव दातव्यं । अश्रद्धया, अदेयं - नदातव्यं ।

श्रियादेयं, ह्रियादेयं, भियादेयं, संविदादेयं, अथ यदि तेकर्मविचिकित्सावावृत्तविचिकित्सावास्यात् ।

येतत्र ब्राह्मणास्संमर्शिनः, युक्ताआयुक्ताः, अलूक्षाधर्मकामास्स्युः, यथातेतत्रंवर्तेरन् , तथातत्रंवर्तेथाः, अथाभ्याख्यातेषु, येतत्रब्राह्मणास्संमर्शिनः, युक्ताआयुक्ताः, अलूक्षाधर्मकामास्स्युः यथातेतेषुवर्तेरन् ॥ ४ ॥

तथातेषुंवर्तेथाः, एषंआदेशः, एषउंपदेशः,

श्रिया संपदा, दातव्यं । असतिविभवे,ह्रिया-लज्जामात्रेण,किंचिद्देयं। भियादेयं-अदाने प्रत्यवायभयादपि दातव्यं । संविदादेयं- संकेतेनापिदातव्यं । धर्मादिविचिकित्सायां निर्णयप्रकारमाह ( अथेति ) अथयदि ते कर्मविचिकित्सावा वृत्तविचिकित्सावास्यात् , कर्माण्यग्निहोत्रादीनि-वृत्तमाचारः, तत्र विचिकित्सा सन्देहः । तत्र - तस्मिन्नर्थे तस्मिन्देशे कालेवा । ये । ब्राह्मणाः वेदयाथात्म्यविदः । तत्र कर्मादौ । युक्ताइति व्यवहितेनसम्बन्धः कर्तव्यः । सम्मर्शिनः विचारकुशलाः । युक्ताः अभियुक्ताः । कर्मणिवृत्तेवा-आयुक्ताः अपरप्रयुक्ताः । अलूक्षाः अरूक्षाः अक्रूरमतयः, अलुब्धाः अपरुषवक्तारोवा । धर्मकामाः-अकामहताः अदाम्भिकाः । ते, यथा, तत्र-तस्मिन् कर्मणिवृत्तेवा, वर्तेरन् , तथात्वमपि वर्तेथाः । अथाभ्याख्यातेषु-अभ्याख्याताः-अभिशस्ताः, अभ्याकृष्टाः निन्दितार्थाः, तेषु यदि विचिकित्सास्यात् । येतत्रेत्यादि-गतम् । एष आदेशः - वेदादेशाज्ञाविधिरित्यर्थः । एष उपदेशः-पुत्रादिभ्यः पित्रादीनांवचनम् । आदेश उपदेश इति श्रुतिस्मृत्योः

एषावेदोपनिषत्, एतदनुशासनं, एवमुपासितव्यं, एवमुचैतदुपास्यं ॥ (स्वाध्[redacted]भ्यां नप्रमदितव्यं तानित्वयोपास्यानिविचिकित्सावास्यात्तेषुवर्तेरन् सप्तचं ।)

इति एकादशो ऽनुवाकः ।

शंनोमित्रश्शंवरुणः, शंनोभवत्वर्यमा, शंन इन्द्रोबृहस्पतिः, शंनोविष्णुरुरुक्रमः, नमोब्रह्मणे, नमस्तेवायो, त्वमेवप्रत्यक्षंब्रह्मासि, त्वामेवप्रत्यक्षं ब्रह्मावादिषं, ऋतमवादिषं, सत्यमवादिषं ॥ १ ॥

कृत्स्नोर्थस्संक्षेपेणोक्तइति वेदितव्यः । किंच- एषावेदोपनिषत् - वेद रहस्यं वेदार्थइतियावत् । एतदनुशासनं -अमोघफलं राजशासनवत् अनतिक्रमितव्यं । एवं उक्तेन प्रकारेण, उपासितव्यं-उपासनं कर्तव्यं । एवमुचैतदुपास्यम्-उक्तमेतदर्थजातमुपास्यम् । नान्यःपन्था अन्वेषणीयः । उ इति निपातो वधारणे ॥ ११ ॥

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
सांहितीषूपनिषत्सु
एकादशो ऽनुवाकः ॥ ११ ॥

---

एवं सांहित्यउपनिषदः समाम्नाताः, तासामादावन्ते च शान्त्यनुवाकउक्तः । उक्तयोजनः पुनरधीतः । अयमप्यादिमेन व्याख्यातप्रायएव । अवादिषमिति भूतकालप्रत्ययो विशेषः । एवं त्वत्प्रसादेन

तन्मामावीत् , तद्वक्तारमावीत् , आवीन्माम्, आवीद्वक्तारं, ओं शान्तिश्शान्तिश्शांतिः

मंवादिषं पञ्चच ।

इति द्वादशोऽनुवाकः ।

---

इति सांहित्य उपनिषद् स्समाप्ताः ।

---

( शंनश्शीक्षाँसहनौयच्छंदसां भूः सयः पृथि
व्योमित्यृतं चाहं वेदमनूच्य शंनोद्वादश। शंनोम
हइत्यादित्यो नोइतराणि त्रयोविंशँतिः । शंनोमि
त्रश्शंवरुणः अवतुवक्तारं । ) ओंशांतिश्शांति
श्शांतिः ।

सहनाववतु, सहनौभुनक्तु, सहवीर्यंकरवा
वहै, तेजस्विनावधीतमस्तु, माविद्विषावहै, ओं
शांतिश्शांतिश्शांतिः, ॥

आविघ्नेन अवादिषम् । तदधीतं आवीन्मां मिथ्याधीतत्वादि दोष प्रसंगेन निवर्तिताध्ययनंच यथा तथा अरक्षत् । अन्यत्सर्वं समानम् ॥

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
सांहितीयुपनिषत्सु
द्वादशो नुवाकः ॥ १२ ॥

# अथानंदवल्ली ।

## ओं ब्रह्मविदाप्नोतिपरं,

परमपुरुष परमात्म परब्रह्मादिशब्दवाच्यपरतत्वज्ञानमेव मोक्षोपायः । " नान्यःपन्था विद्यते अयनाये " इत्यत्र सर्वोपनिषदेककण्ठ्य मेवेत्याह ( ब्रह्मविदाप्नोतिपरमिति ) स्वरूपस्वभावशक्तिभिः निरतिशय बृहत बृंहणंच ब्रह्म । " बृहत्त्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत" इति विष्णुपुराणे । सर्वतस्स्वयमनन्त मुपासकानांचानन्त्यावहं ब्रह्मेत्यर्थः । ब्रह्मवित - ब्रह्मज्ञः । "आगमोत्थं विवेकाच्च द्विधाज्ञानं तथोच्यते " इति द्विविधे ब्रह्मज्ञाने विवेकजं अत्रोक्तं, मापकत्ववचनात । संहिती युक्तं बहुविधं तपस्तप्त्वा आनन्दोब्रह्मेति व्यजानादित्यस्यामेव द्वितीयायां विवेकजं स्वयमेववदति । परविद्याजनकंतपश्च बहुविधमुक्तं संहितासु " तद्धितपस्तद्धितप " इत्यादिना । वक्ष्यति च"तद्धितपस्तद्धि तप"इत्यादिकम् । अस्मिन्ननुवाकेच श्रद्धर्तंसत्यं योग इति वदति । आगमोत्थन "यतो वा इमानि भूतानि " इत्यादि वाक्यजन्यज्ञानमिति वक्ष्यति । आप्नोतिपरं-सर्वतोव्याप्नोति, निश्शेषगुणविभूतिकं ब्रह्म नु भवतीत्यर्थः । परं-बद्धमुक्तनित्येभ्यः परं सर्वकारणं चद्रविंशमेकीभूतमपि तस्मादुपरिष्टात परमव्योम्निवर्तमानंच । जीवस्य परिशुद्ध स्वरूपमेवात्रपरमिति प्राप्यतयोक्तमिति नशंकनीयम् , वक्ष्यमाणब्राह्मण अविपाद्याक्षर परमव्योमाधिपत्य निरुपाधिकविपश्चित्त्वाकाशादि निखिलजगदे ककारणत्वादि वैभवानुपपत्तेः । मुक्तस्यापि जगद्व्यापारवर्जत्वं [illegible] । परब्रह्मवित् परं ब्रह्ममाप्नोतीत्यर्थः । परप्राप्तिकामो ब्रह्मविद्यादित्यर्थः । नान्तरीयकतया तस्या पुम्यंचोक्तमेव । यथा "सम्पद्याविर्भाव"इति । ब्रह्मविदाप्नोतिपरामिति

तदेषाऽभ्युक्ता, सत्यंज्ञानमनंतंब्रह्म, योवेदनिहितं गुहायां परमेव्योमन् ॥ १ ॥

चतुरोंशान् चतुर्भिर्वाक्यै र्व्याकुर्वाणोमन्त्रआम्नायत इत्याह (तदिति)तदेषा भ्युक्ता- तत् - ब्रह्म अभिमुखीकृत्य प्रतिपाद्यतया ऋगेषा अभ्युक्ताभि हिता । ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन क्रियतइत्यर्थः । ( सत्यं ज्ञान मनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन् , सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ) अयं साक्षिमन्त्रः । ब्रह्मसिद्धिः द्वेधा । उपलब्धि र्लब्धिश्च । उपलब्धिश्च लक्षणतः प्रमाणत श्च द्विविधा । लक्षणमपि द्विविधम् - सर्वज्ञत्वसर्वश- क्तित्व सत्यकामत्व सत्यसंकल्पाद्यनन्तमंगळगुणोपस्थापकेन इतर सकलसमयाभ्युपगत तत्त्वव्यावर्तकेन निखिलहेयप्रत्यनीकत्वोपस्थापकेन स्वाभ्युपगतबद्धमुक्तनित्यव्यावर्तनात् शोधनं चेति । तत्र प्रथम लक्षण मुत्तरानुवाके संक्षिप्योच्यते ( यतो वा इमानीत्यादि ) तस्य जगज्जन्मादिकारणस्य सर्वशक्ते स्सकलेतरव्यावृत्तं स्वरूप मभिधी- यते ( सत्यं ज्ञान मनन्तं ब्रह्मेति ) तत्र सत्यपदं निरुपाधिक सत्तायोगिब्रह्माह । तेन विकारास्पद मचेतनं तत्संसृष्ट श्चेतनश्चव्या- वृत्तः , नामान्तरभजनार्हावस्थान्तरयोगेन तयो र्निरुपाधिकसत्ता योगरहितत्वात् । ज्ञानपदं नित्यासंकुचितज्ञानैकाकार माह , तेन कदाचित् संकुचितज्ञानत्वेन मुक्ता व्यावृत्ताः । " तमक्रतुं पश्यति वीतशोकः " " धातुः प्रसादात् " " बहवो ज्ञानतपसा पूता मद्भा व मागताः " " आविर्भूतस्वरूपस्तु " "सम्पद्याविर्भाव " इत्यादिषु मु- क्तानां ज्ञानविकासस्य कालावच्छेदं दर्शयति । अत्रतु दहरवाक्यवत् स्वतोनवच्छिन्नज्ञानत्व मुक्तम् । ननु ज्ञानमात्रं ब्रह्मेति किमिति नाभ्युपेयते ? प्रथमं तावत् ब्रह्मसूत्रलंघनभयात् । "तद्गुणसारत्वा त्तद्व्यपदेशः प्राज्ञवत्" इतिहि सूत्रं । सत्यपदेनैवजडव्यावृत्तेः वक्तव्यत्वं

गात्व । ज्ञानस्वरूपस्य स्ववाक्य एव विपश्चित्पदेनानुभाषणं च निरपेक्षं प्रमाणं ? सर्वज्ञत्ववचनेन प्रत्यक्त्वमप्युक्तमेव । "विज्ञानघनः" एवेत्यादिना स्वप्रकाशत्वम भ्युपगम्यत एव । न तत्रास्माकं प्रद्वेषः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितमाह । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति स्वाभाविकज्ञानबला द्यनन्तकल्याणगुणकत्वात् स्वरूपगुणैश्चानन्त्यम् । तेन पूर्वपदद्वय व्यावृत्तकोटिद्वयविलक्षणाः सदा नित्यस्वरूपरूपगुणाः सदा पश्यन्ति सूरय इति सदादर्शनवन्तोऽव्यावृत्ताः । विशेषणानां व्यावर्तकत्वात् । विष्णोः पदं सदा पश्यन्तीति नित्यनिर्दोषत्वं तेषां सातिशयं च प्रतीयते । अतोऽनेन वाक्येन जगन्निमित्तोपादानं वस्तु सकलेतरवस्तु विजातीयमिति लक्षितं । तथाहि— अन्तशब्दः समाप्तिवचनः, देवदत्तोऽयमिहैवेति देशपरिच्छेदः, इदानीमेवायमिति कालतस्समाप्तिः, एवमेवायमिति स्वरूपतः परिच्छेद उक्तः । ब्रह्म तु सर्वत्रैव भवति सर्वदैव भवति सर्वं च भवति । नैवं प्रकृतिपुरुषकालादयस्त नित्याख्यानि अस्यरूपाणीति तानि व्यावृत्तानि । तथा चित्स्वरूपलक्षणे प्यन्तर्भूतमेतत्सर्वं । कुतः ? सर्वत्रास्ति सदास्ति सर्वं च भवतीति देशकालवस्तुभिरेवानन्त्यसिद्धेः । तत्र च यथा न देशकालयोरभावेन देशकालाभ्यामपरिच्छेद उक्तः, किंतु ताभ्यां विशिष्टतया, एवं न वस्त्वन्तराभावेन वस्तुपरिच्छेद इति स्थितम् "वासुदेवस्सर्वं" "न तदस्ति विना यत्स्याद्" "सच्च त्यच्चाभवत्" "सर्वं खल्विदं ब्रह्मे"ति वस्तुपरिच्छेद उच्यते । ननु—अनन्तपदेनैव सर्वं व्यावृत्तं किं सत्यज्ञानपदाभ्यां ? उच्यते । सत्यज्ञानपदे त्वानन्त्योपपादके, सत्यस्य हि—कालानन्त्यसिद्धिः । अनन्तदेशगतस्य वस्तुनोऽवच्छेदोऽपि ज्ञानस्वरूपस्यैव सम्भवति, न जडस्य, अत स्सत्यज्ञानपदाभ्या मव्यावृत्ततया नित्यसूरय एवानन्तपदेन व्यावृत्ता इत्युक्तम् । यथा - गुणवत् क्रियावत् समवायिकारणमिति परीक्षकै रुक्तं द्रव्यलक्षणं द्रव्यरूपाणा मेव गुणकर्मसामान्यादीनां व्यावर्तक मुच्यते एवं ब्रह्मगुणानामेव सजातीय विजातीयानां व्यावृत्तिलक्षण मेतत् । "कि मेकं दैवतं" इत्यस्य अनन्त मित्युक्तं । तर्ह्यनन्तशब्दस्य पुंल्लिंगता स्यात् । बाढं । तर्ह्यनन्तो ब्रह्मेति निर्देशविपर्यय स्स्यात् । नैवं देवानां प्रिय । यो वेदेत्यस्य कर्मतया अनन्तमिति निर्देशात् । अतः सर्वथा

सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चितेति,

प्रत्यावर्तकं स्वरूपलक्षणमित्युक्तम् । एते सत्यज्ञानानन्दादिगुणाः स्वरूप परविद्या:प्रसंहार्याः, ब्रह्मस्वरूपान्तर्गतत्वादि "त्यान न्दादयः, प्रधानस्ये " त्यधिकरणोक्तम् । अतस्सत्यादीनिपदानि कल्याणगुणप्रतिपादनपराण्येव निखिलहेयप्रत्यावर्तकानि । सत्यात्म प्राणारामामित्यादावपि लक्षणमुक्तम् । कथञ्चि द्वचनसौष्ठवा देत ल्लक्षणवाक्यं प्रसिद्धम् । इत्थं ब्रह्मविदित्यत्र वेदनकर्मवाचि ब्रह्मपदं व्याख्यातम् । वेदनांशस्यविवरणम् ( योवेदनिहितंगुहायां परमेव्यो मन् इति ) उत्तरत्र " सयश्चायम्पुरुषे, यश्चासावादित्ये. सए क " इतिहृदयगुहायां निहितस्य हिरण्यवर्णं पुण्डरीकाक्षं महारज तम्बरं रूपमिति निर्दिश्यते । " अन्तर्हृदय आकाशः, तस्मिन्नयं पुरुषोमनोमयः, अमृतोहिरण्मयः " इतिचोक्तम् । " गुहायां निहि तोस्यजन्तोः " " पद्मकोशप्रतीकाशं " " नीलतोयदमध्यस्थे " त्यादिश्रुतयश्च । " तमसःपरमोधाता " " भद्रासत्योमहस्वा " निविच्च परमव्योम्निनिहितंरूपम् । एवं परमव्योम्निनिहितमादित्य वर्णं स्वहृदयगुहायां ' सेन्द्रयोनि ' रित्युक्तमार्गेणानुकम्पया तेनैव रूपेण प्रविष्टं सत्यादिलक्षणंच योवेदेत्यर्थः । "गुहांप्रविष्टावात्मानौहि" " गुहायां निहितोस्यजन्तो " रित्याद्यैकार्थ्यान्न परमव्योमानि गुहा नच गुहायां परमव्योम । " अस्माल्लोकात्प्रेत्य " " अमुंलोकंप्रेत्य " " एतत्ततो भवति " " नाकस्यपृष्ठमारुह्य " " अक्षरेपरमेव्योमन् " " तमसोप रिष्टात् " " यद्यतयोविशन्ति " " सूर्यद्वारेण " " सएतान् ब्रह्मगम यति " " सोऽध्वनः पारमाप्नोतितद्विष्णोः परमं पदं " " अश्वत्थस्सो मसवनः " " वेदनाक " मित्याद्यनेकोपनिषदैकार्थ्यात् । श्रुतोपनिष त्कगत्यभिधानात् प्राप्तिमपि विशिनष्टि (सोऽश्नुतेसर्वान्कामान्सहेति) " अश्नुते " – प्राप्नोति । " सर्वान् कामान् " – काम्यन्तइति कामाः,

दहरविद्यायां तस्मिन् यदन्तस्तदन्वेष्टव्यं किंतदत्रविद्यते यदन्वेष्टव्यं तस्मिन् कामास्समाहिताः, एषआत्मापहतपाप्मा सत्यकामस्सत्यसंकल्पः" "य इहात्मान मनुविद्यव्रजंत्येतांश्च सत्यान् कामान्" इत्यपहतपाप्म त्वादयोगुणाः कामशब्देनोच्यन्त इतिश्रुत्यैव व्याख्यातम् । वाक्यका रश्च " तस्मिन्यदंतरिति कामव्यपदेश" इत्यादिना विस्पष्टमाह । "कामा दीतर त्रचायतनादिभ्यः " इति हृदयायतनत्वसत्यसंकल्पत्व विशेषरूपव शित्वादिभ्यः तत्सहचारिण स्सत्यकामादेः प्रत्यभिज्ञानादिति गुणोपसंहा रसूत्रंच । अतोविद्याविकल्प वचनाञ्च सर्वविद्यासुक्तस्वाभाविकज्ञान बलाद्यनंतगुणान् , " ब्रह्मणा " – सत्यज्ञानादिलक्षणेन, सहा श्नुते - सर्वगुणान्वितं ब्रह्मानुभवतीत्यर्थः । तत्क्रतुन्यायात् गुणोपासनंच युक्तमेव । दहरविद्यायां गुणप्राधान्यं वक्तुं सहशब्द प्रयोगः ; यथा " ब्रह्मणोमहिमानमप्नोती " त्यस्मिन् प्रकरणे । प्रकर णांतरेषु च सत्यज्ञानानंन्त्यं विपश्चित्त्वं सत्यकाम सत्यसंकल्पत्वादयो गुणाः मुमुक्षुणाकाम्यन्तइति निर्दिश्यन्ते , तान् सर्वाननंतगुणस्वरू पगतत्वादाप्नोति । परमित्यंशं विवृणोति ( ब्रह्मणाविपश्चितेति ) ब्रह्मशब्दस्य पुनः प्रयोगः उपास्यस्यैव प्राप्यत्व कथनार्थम् । विवि धपश्यच्चित्वं हिविपश्चित्त्वम् । पृषोदरादित्वा त्पश्यच्छब्दावयवस्यय कारलोपेन व्युत्पादितः। वेद्यतयोक्तेन तेनैव सर्वज्ञेनसहेत्यर्थः । सत्य स्यैव सर्वज्ञत्वं परविद्यायामप्युक्तम् – " यस्सर्वज्ञस्सर्वविदि " त्या रभ्य ".तदेतत्सत्य" मिति । वक्ष्यमाणसृष्ट्यखिल प्रकार प्रशासनानु कूलं बहुस्यामिती क्षणक्षमं च विपश्चित्त्वं द्रष्टव्यम् । इतिकरणं मंत्रस माप्तिद्योतकम् ।

अयमर्थः – परमेव्योम्न्यसंकुचितेनानंत्येनावस्थितं उपासकानु ग्रहेणात्यल्पहृदयगुहायां तेनैव रूपेण सत्यंज्ञानमनंतं ब्रह्मेतियोवेद स विपश्चितानिखिलकारणभूतेन ब्रह्मणासत्यज्ञानादिलक्षणेन सह सर्वानुशासनविषयभूतान् प्राप्यान् गुणान् अश्नुतइति ।

केचिदाहुः — कामशब्दनिर्दिष्टः पुत्रादयइति । तदा दहरादि मतिरेव विरोधः । पंचमाप्नोतीत्येत ...रणाविरोधः । तत्क्रतु न्यायविरोधः । सूत्रविरोधश्च । ननु ...नस्वरूपस्यकथं ज्ञानादिगुण कत्वं संभवति? त तत्सूत्रकारेण परिहृतं, " एवमप्युपन्यासा त्पूर्वभावा दविरोधं बादरायणः " इति । एवम् – विज्ञानस्वरूपस्यैव पूर्वेषामप हत पाप्मत्वादि सत्यसंकल्पत्वादिपर्यंतानामपि ' य आत्मापहतपाप्म ' ...पन्यासात; पूर्वेषाम् – अपहतपाप्मत्वादीनामपि स...वावगमादुभय श्रुत्यवगतो भयस्वरूपस्य परस्परविरोधाभावात् रूपद्वयं नान्योन्यपरि हार्यमित्युभय रूपसमुच्चयं भगवान् बादरायणोमन्यते । " यावदात्म भावित्वाच्च नदोषस्तद्दर्शनात् " – ज्ञानस्य यावदात्मस्वरूपभावित्वाच्च तेन तद्व्यपदेशे नदोषः, खण्डादिषु तथादर्शनात; खण्डादौहि याव त्स्वरूपभाविधर्मत्वेन गोत्वस्य गौरित्येव व्यपदेशो दृश्यते । एवं परमका रण पर...व्योमनिलय परब्रह्मवेदनया परमकारण सर्वगुणान्वित विप श्चितोऽभिवचनात् ...निर्विशेषब्रह्मत्वं वेदनमन्त...इति सुस्पष्टं द्रष्टव्यम् ।

...दयगुहायां कथमवस्थानमित्यपेक्षांपूरयति " तस्माद्वाएतस्मादात्म न " इत्यारभ्य " तस्माद्वाएतस्मात् विज्ञानमया... ; अन्योंतर आत्मानं दमय " इत्यंतेन । तत्रपरमव्योम्नि निहितस्य च परमात्मवेदर्शयि... ...ताकाशस्य तदंतर्वर्तिनो ब्र...विपश्चिता मसत्यत्वम सार्वज्ञमन्त वत्व मल्पानंदादिगुणकत्वं तत्प्रशासनाधीनधारणत्वं तत्संक...ायत्त स्वरूपस्थिति प्रवृत्तित्वं तदनुप्रविष्टत्वं तदधीनप्राणानंदादिकत्वमित्या दिकं सर्वात्मनैषांत्याज्यत्व प्रदर्शनाय " तस्माद्वाएतस्मादात्मन आका शस्संभूत " इत्यादिना । जीवस्य परमप्राप्यतया निर्दिष्टस्य परत्वमेव सर्व त्रास्मिन् अनुवाके प्रतिपाद्यते । तथाहि अण्डकारणाना माका शादीनामपि स्रष्टृत्वं, तेषांसर्वेषांचा ब्रह्मत्वं, वाङ्मनसामोचरनिरति शय द...पब्रानन्दत्व, मात्मसत्तानाशहेतुज्ञाना- ज्ञानविषयत्वं, कामा देव निखिल...सृष्ट तदनुप्रवेश तद्भावादिकं, सर्वावस्था- सुप

तस्माद्वा एतस्मादात्मन आकाशस्संभूतः

स्वाधीनत्वं. निखिलहेय प्रत्यनीकत्वं, निखिलप्राणनानन्दादिहेतुत्व निखि लभयाभयहेतुत्वं, अहंपत्वानात्मत्वा निरुक्तानिलयनत्व निखिलत्वा द्यादि प्रशास्तृत्वादिकं. स्वप्रतिष्ठानामुपासकानां सर्वतोभयप्रदत्व अकर्मनिमित्त दिव्यरूपत्वं, निखिलपुण्यापुण्यनाशकत्वमित्यादि वैभवमु पपाद्यते ।

सत्यज्ञानादिलक्षणस्यात्मनोविपश्चितएव जगदुपादानत्वमाह (तस्मा द्वाएतस्मादात्मन आकाशस्संभूतइति ) तस्माद्वाएतस्मादात्मनइति पद त्रयेण मन्त्रवर्णोदितरूपं सर्वमनूद्य निरुपाधिकसत्यं परमकारणत्वात्प रमित्युच्यते । वेदितव्यश्चोपनिषद्भिः । तथाहि- मनुनाप्रक्रांता सुबालोपनिषत् । " तद्विष्णोः परमंपदम् , तद्देवत्रिर्वाणमनुशासनं. तमः परेदेवएकीभवति, तस्मात्तमस्संजायते, तमसोक्षरं, अक्षरादव्यक्तं. " मित्यारभ्य " अद्भ्यः पृथिवी तदण्डमभव " दितिसर्वशाखा प्रत्ययः प्रदर्शितः । तर्हिकिमर्थं अत्रतमः प्रभृतिसृष्टिर्नोक्ता? स्वशा खायाअन्यत्रोक्तत्वात् । ' तमआसीत्तदानीं, अजा मेकां, यदेकमव्यक्तं" मित्यादौ पृथिवीलोकादारभ्य सर्गक्रमप्रकारस्तोहितिषूक्तः, अत्राक्ष रपरमव्योम्नः प्रस्तुतत्वा तदपेक्षयास्य व्योम्नः परेरनंततयाभ्युपेत स्या त्यल्पत्वमंतवत्वं तत्क्रोडीकृताना मुदुंबरमशकन्यायं च दर्श यितु माकाशादारभ्य सृष्टिरुच्यते । परभागेनवासर्व सुस्पष्टामतिभवात । " त्रिपादस्यामृतंदिवि, त्रिपादोर्ध्वउदैत्पुरुषः, पादोस्येहाभवात्पुनः, " " आदित्यवर्णं तमसःपरस्तात्. " " यत्रपूर्वेसाध्यास्संतिदेवाः " " यत्रा मृतस्सपुरुषोह्य व्ययात्मे " तिपरभागस्सर्वत्रोच्यते । तद्वदत्रापि परम व्योमापेक्षया कियानयमाकाशोण्डोदरगतः, कियतीवापृथिवी पंचा शत्कोटि विस्तीर्णा, सुपरिरिचिदपेक्षया कियंतएते ब्रह्मादयोजीवाः । " एतेवैनिरयास्तातस्थानस्य परमात्मनः " इतिपंचमवेदः । प्रकृतिग

आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नं, अन्नात्पुरुषः ॥ २ ॥

इदहंकारादिशरीरादाकाश स्संभूतः । यस्याहंकारश्शरीरमित्यादिद्रष्टव्यम् । सर्वत्र शरीरप्रतिसंबंधिन्यात्मशब्दप्रयोगः । यद्यपिचेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथापि प्रयोगप्राचुर्यात्तज्ज्ञेयम् , यथा गविगोशब्दस्य । अर्थान्तर प्रतीतिस्तु तदसाधारणापेक्षया । "सोऽकामयत" "विज्ञानमयः" "अन्योंतर आत्मानंदमयः" "तस्यैषएव शारीरआत्मा" इत्यादिवाक्यशेषाश्चास्थिरीकुर्वन्ति । संभूतइति सर्वत्रानुवर्तते । ब्रह्माण्डकारणानां पंचभूतानां ब्रह्मादिभ्यः कारणतया महत्त्वं च प्रशस्यते । "आकाशाद्वायुः"– स्पर्शमात्रगुणकस्संभूतः । एवं "वायोरग्निः , अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम् , अन्नात्पुरुषः" इति सृष्टिक्रम उक्तः । ब्रह्मणोऽचिंत्यशक्तित्वं तद्व्यतिरिक्तस्य सर्वात्मनाक्षुद्रत्वंच सृष्टिप्रळयकारणवाक्यानां तात्पर्यार्थः, "तत्तेजऐक्षत । ताआपऐक्षंत" इति छान्दोग्यैकवाक्यात् । तद्रूपेणावस्थितः परमात्मैव साक्षात्स्रष्टेतिसूत्रोक्तं "तदभिध्यानादेवतु तल्लिंगात्सः"इति । तुशब्दः पक्षव्यावृत्त्यर्थः । न तेजः प्रभृतयः स्वानंतराणां कारणानि, अपितुतच्छरीरकः परमात्मैव, कुतः? परमात्मसृष्टिर्लिंगात्तथाविधाभिध्यानात् । यथा "तदैक्षत बहुस्यां प्रजायेयेतिबहुभवनसंकल्परूपाभिध्यानं दृश्यते । इदृश मभिध्यानं तेजः प्रभृतिशरीरकस्य परमात्मनएव संभवतीतिसूत्रार्थः ।

ब्रह्मविदाप्नोतीति प्रस्तुतं ब्रह्म "सत्यं ज्ञानमनंतं ब्रह्म" इति व्याख्यातं, अथ "तस्माद्वाएतस्मादात्मन" इति तदेवात्मशब्देन

सवाएषपुरुषोन्नरसमयः, तस्येदमेवशिरः, अयं दक्षिणःपक्षः, अयमुत्तरःपक्षः, अयमात्मा; इदं पुच्छंप्रतिष्ठा, तदप्येषश्लोकोभवति ॥

इत्यानन्दवल्ल्या प्रथमोऽनुवाकः ।

---

निर्दिष्टम्, तस्यैव इतरसमस्तात्मत्वाभिधानं दर्शयितु मन्तरात्म परंपरा माह " सवाएषपुरुषोन्नरसमयः " इत्यादिना " अन्योंतरआत्मानन्दमय इत्यन्तेन । तेन निखिल जगदेककारणत्वं निखिललोकान्तरत्वंच लभ्यते, उभयमेवहि परमात्मासाधारणलक्षणम् । " अन्नात्पुरुष " इत्यन्नावि कारत्ववचना दन्नरसमयइति न प्राचुर्यार्थेमयट् । सर्वांतरप्रतिपत्त्यर्थं प्रथम मन्नरसमय न्देहं बुद्धावारोपयति ( सवैपुरुषइति ) " तस्येदमेव शिरः " यदेवलोकवेदयो स्सिद्धं तदेवशिरः, न प्रमाणान्तर विरुद्धं किमपि श्रुतिशिरोभिस्स्वीक्रियते, इत्युत्तरेष्वपि अनुसन्धानार्थ मुच्य ते । " अयं दक्षिणःपक्षः, अयमुत्तरःपक्षः " – बाहू । " अय मात्मा"– तयोर्मध्येयस्ताद्ग्रीवाया उपरिष्टान्नाभेर्योमध्यकायः, सआत्मा–प्रधानभागः, इतराङ्गानां धारकश्च । " इदं पुच्छं प्रतिष्ठा "– गो पुच्छमिवाधस्तादाळम्बते यआधस्त्यःकायः पादद्वयरूपः तदिदम्पु च्छमिव पुच्छं, प्रतितिष्ठते अनेनेति प्रतिष्ठाच । वैश्वानरविद्यायां पादयो र्गुणनामत्वेन प्रतिष्ठाशब्दः प्रयुक्तः । "तदप्येषश्लोकोभवति"– यथा तदेषाभ्युक्तेति ब्रह्मसाक्षिमन्त्रः एवं तद्रूपतया जगत्कारण कोटिनिविष्टान्नमय मभिमुखीकृत्य तस्य कारणत्वादि वैभवविषय एष वक्ष्यमाणश्लोक आम्नातो भवति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
आनन्दवल्ल्यां प्रथमोऽनुवाकः ॥१॥

---

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीं श्रिताः, अथो अन्नेनैव जीवन्ति, अथैनदपियन्त्य

( अन्नाद्वै प्रजाः प्रजायन्ते, याः काश्च पृथिवीँश्रिताः ) अन्नान्नमिति अन्नरसमाष्टिरुच्यते । अन्नरसस्यावस्थान्तरमात्रंहि शरीरं, अतोन्नस्यात्र मन्नमयस्यात्रम्भवति । अन्नात- अण्डावच्छिन्नात्पञ्चीकृतात्पंचभूतात् । " अन्नमसृजत " ति छान्दोग्ये पृथिव्यण्ड मन्नमित्युच्यते । वेप्रसिद्धौ । प्रजाः- जरायुजाण्डज स्वेदजोद्भिज्जा स्सुरनरतिर्यक्स्थावरान्त भूताः । पांचभौतिकानामपि शरीराणा मन्नप्राचुर्यादन्नमयत्वं । अन्नरसव्याप्तिमात्रभवास्ताश्चात्यन्तोत्कृष्टाश्च ब्रह्मादिस्थावरांताः । पृथिवीं-अद्भ्यः पृथिवीत्युक्तं जलावरणं । आश्रिताः । ब्रह्मादिशरी र मप्यनेकसंहननत्वा त्पृथिव्यवष्टब्धं । " अथो अन्नेनैवजीव न्ति "- घटादे र्मृदपेक्षा केवलमुत्पत्तिकाले, नैवमत्र, सुहुतेनान्नेनै व ब्रह्मादयोजीवन्ति , अपहुतेनासुराः , यज्ञशिष्टेनवयं, अस्म दनुपयुक्तेन पश्वादयः, केवलमृदावृक्षजलकादयः । " अथैनदपियन्त्य न्ततः "- एनत् - एतत , अपियन्ति - अपीतिः - अप्ययः, अन्नपरि णामेनहिमरणमपि, अन्ततः । " अन्नंहिभूतानां ज्येष्ठम् "- इतरभूतेभ्यो बहुतरमुपजीव्यंच प्राणिनामुपजीव्येष्वग्रयंच । "तस्मात्सर्वौषधमुच्यते"- सर्वप्राणिनां धातुसाम्यकर मौषधमायुर्वेदे त्युच्यते-"नाहिपथ्याशनस्या मेर्व्याधिरन्तरमाविशेत " इति । श्रीभागवतेच " नाश्नतः पथ्यमे वान्नं व्याधयोभि भवन्तिचे"ति । "सर्ववैतेन्नमाप्नुवन्ति, येन्नं ब्रह्मोपासते"- यावदपेक्षितमन्नं प्राप्नुवन्ति, येजन्मस्थितिलयहेतुत्व साम्यादन्नं ब्रह्मरूपत्वे। उपासते तेस्वन्नाधिपतयोपि भवन्ति । उत्तरानुवाके-अन्नमयादीना मुपासनं

न्नते:, अन्नं हि भूतानां ज्येष्ठं. तस्मात्सर्वौषधमुच्यते.
सर्वं वै तेऽन्नमाप्नुवन्ति, येऽन्नं ब्रह्मोपासते, अन्नं हि भू
तानां ज्येष्ठं, तस्मात्सर्वौषधमुच्यते ॥ १ ॥

अन्नाद्भूतानि जायन्ते, जातान्यन्नेन वर्धन्ते,
अद्यते त्ति च भूतानि, तस्मादन्नं तदुच्यत इति, तस्मा
[illegible], अन्योऽन्तर आत्मा प्राणमयः,

प्राप्तिश्चोच्यते – " अन्नमयमात्मानमुपसंक्रम्य " ति । ब्रह्मदृष्टिप्रकार श्चोत्तरानुवाके स्पष्टमेव वक्ष्यमाणः । ब्रह्मदृष्टेर्हेतुं ब्रह्मणा साम्यप्रकारं स्मारयति ( अन्नं हि भूतानां ज्येष्ठं तस्मा त्सर्वौषध मुच्यत इति ) " भेषजं भगवत्प्राप्तिरि " त्यादिवचनात् ब्रह्मच सर्वभेषजं । " अन्ना द्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । " एतच्च समानं ब्रह्मणः । निर्वचनेन चाह ( अद्यतेत्ति च भूतानि ) सृष्टिस्थित्यो स्स्वयमेवाद्य ते संहारे अत्ति च । " तस्मादन्नं तदुच्यत इति "- इत्थं ब्रह्मादिभि रनन्तप्रकारभेदै रनन्तप्रकारभेदं भुज्यते भुनक्तीति चान्न मुच्यते, ब्रह्मचैवं । इतीति साक्षिश्लोकसमाप्तौ । " तस्माद्वा एतस्मा दन्नरसमयात् , अन्योन्तर आत्मा प्राणमयः " – अन्नरसमयादिति शब्दादिगुणक सर्व भूतग्रहणं । तस्मा दन्यो विसजातीयः, अन्तरः-भूतसूक्ष्ममय इत्यर्थः । आत्मा-आप्नोतीति ह्यात्मा प्रधानभूतो धारकश्च । प्राणमयः-पञ्चवृत्तेः प्राणवत्तामात्रेण प्राणत्वं पञ्चवृत्तिषु प्राणवृत्तेः पञ्चमत्वाद्वा । यथा

तेनैषपूर्णः सवाएषपुरुषविधएव, तस्यपुरुषविध

तां, अन्वयंपु षविधः ॥ २ ॥

तस्यप्राणएवशिरः, व्यानोदक्षिणःपक्षः,

अपानउत्तरःपक्षः, आकाशआत्मा, पृथिवीपुच्छं

प्रतिष्ठा, तदप्येषश्लोकोभवति ॥

इत्यानन्दवल्ल्यां द्वितीयोनुवाकः ।

---

पाञ्चभौतिकस्यापि शरीरस्यान्नरसप्राचुर्यात् अन्नरसमयत्वं । तेनैषपूर्णः- बाहिरन्तश्च तेना प्यायकेन व्याप्तोन्नरसमयः पुष्कलोभवति । प्राणवि योगेहि विरूपो विकलोभवति दुर्दर्शोपि मरणे चोपक्रान्ते । " सवा एषपुरुषविधएव " प्राणमयोपि पुरुषाकारः । " तस्यपुरुषविधतां अन्वयं पुरुषविधः " – तस्यान्नमयस्य पुरुषविधत्व मनुकृत्यायं प्राण मयः पुरुषविधः, पुत्रमनुकृत्य पिताभवतीति ज्ञाप्यते । अथवा तस्ये ति प्राणमयउच्यते । यथा पितुस्सदृशः पुत्रः एवं प्राणस्य पुरुष विधता मनुप्राप्योय मन्नरसमयइति । एवमुत्तरेष्वपि । " तस्य प्राणएव शिरः " प्राणवृत्तिः प्रधानमङ्गं । योव्याप्यनयत्याशितपीतं सदक्षिण इत्याह " व्यानोदक्षिणःपक्षः "। " अपान उत्तरःपक्षः " अन्नपानविसर्जना त्सव्यबाहुः । " आकाशआत्मा "- समानवायु व्याप्तः प्राणापानादि मध्यवर्त्याकाशो मध्यकायः । " यथाकाश स्थितोनित्यं वायुस्सर्वगतोमहा " निति समानस्यावकाश प्रदत्वा दाकाशाख्यावा । " पृथिवीपुच्छंप्रतिष्ठा "– पृथिवी प्रधान उदान इति तदाख्य आधारः पादः । पृथिव्यामाकाशः प्रतिष्ठितइतिच । " तदप्येषश्लोकोभवति " पूर्ववत् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

आनन्दवल्ल्यां द्वितीयोनुवाकः ॥२॥

---

प्राणंदेवाअनुप्राणंति मनुष्याःपशवश्चये. प्राणोहिभूतानामायुः, तस्मात्सर्वायुषमुच्यते, सर्वमेवतआयुर्यंति, येप्राणंब्रह्मोपासंते, प्राणोहिभूतानामायुः, तस्मात्सर्वायुषमुच्यतइति, तस्यैषएवशारीरआत्मा, यःपूर्वस्य ॥ १ ॥

" प्राणन्देवा अनुप्राणन्ति "- पञ्चधावस्थितप्राणमनुसृत्य ब्रह्मादय श्चोच्छ्वसन्ति । " मनुष्याःपशवश्चये " नंविशेषइत्यर्थः । " प्राणोहि भूतानामायुः । "- स्थावरजङ्गमानामायुः सएव । यावत् अस्मिन् शरीरे प्राणोवसति तावदायुरिति । " तस्मात्सर्वायुषमुच्यते " मातर्ताजग त्प्राणउच्यते । स्वार्थेतद्धितः । सर्वा सर्वेषामायुः । " सर्वमेवत आयु यंन्ति "- यावदपेक्षित मायुस्तत्सर्वमाप्नुवन्ति । "येप्राणं ब्रह्मोपासते"- प्राणसमष्टिविषये ब्रह्मदृष्टिं येकुर्वते, ब्रह्मत्वध्याये तमुपासवते तथा भवन्तीत्यर्थः "( प्राणोहि भूतानामायुः, तस्मात्सर्वायुषमुच्यतइति ) ब्रह्म सूक्ष्मतयाध्येयरूपमिति समानेनेतदित्यर्थः । केऽह्मिवान्यातकः प्राणया दिविहि द्वयमपि वक्ष्यति । इतिः श्लोकसमाप्तौ । " तस्यैष एवशारीर आत्मायः पूर्वस्य " अन्नमयस्याकाशादि पंचभूतमयस्यात्मत्वेन योनिर्दिष्टः तस्माद्वाएतस्मादात्मन आकाशइति सएवप्राणमयस्यापि शारीर आत्मा । शारीर शरीरसंबंधी । " मनोमयः प्राणशरीर " इति श्रुत्यंतरंच ।

कथमन्नमयस्य परमात्मत्वेऽयवगम्यते? इत्यं, तस्माद्वाएतस्मादात्मन स्याकाशादि सकलकारणत्वेन प्रत्यगभीवव्यतिरिक्तस्य ब्रह्मणएवा त्मत्व व्यपदेशात् व्यतिरिक्ताकाशादीनां तत्संघात पस्यान्नमयस्य

तस्माद्वा एतस्मात्प्राणमयात्, अन्योऽन्तर आत्मा म-
नोमयः, तेनैष पूर्णः, स वा एष पुरुषविध एव, तस्य
पुरुषविधतां, अन्वयं पुरुषविधः, तस्य यजुरेव शिरः,

च तच्छरीरत्वमवगम्यते । अन्यस्यापि अपुरस्कृतत्वाच्च । सुबालभाष्या दिन काण्वादिपठित तत्वानां तच्छरीरकत्व तदात्मकत्वायवगमाच्च । अतस्तस्माद्वा एतस्मादित्यत्रैवान्नमयाद्यानंदमय पर्यंतानां परमात्मैवा त्मेत्यवगम्यते । अतश्चात्यंतरेश्च यः पूर्वस्य आत्मेत्यवगतः स एव प्रा णमयस्या प्यात्मेति समंजसम् ।

कथं तर्हि प्रस्तुतमात्मानं परित्यज्याप्रकृतजीवस्य यःपूर्वस्येत्यनुवा दः उच्यते, तस्माद्वा एतस्मात्प्राणमयादिति श्रेष्ठप्राणग्रहणेन सर्वबाह्येंद्रिय संग्रहश्च । सप्तप्राणाः प्रभवन्ति सप्तवैशीर्षण्याः प्राणाः, तथाप्राणाइति श्रुतिसूत्रेषुप्राणशब्देन इन्द्रियवचनात् । प्राणसंवादाच्च । उत्तरानु वाकेन अन्नं प्राणंचक्षुश्श्रोत्रमिति कण्ठोक्तत्वाच्च । "भूतात्माचेन्द्रियात्मा च प्रधानात्मा तथाभवान् । आत्माच परमात्माचत्वमेकः पंचधा स्थित" इति श्रीविष्णु पुराणेक कण्ठ्याच्च ।

नन्वन्नमय शब्देन भूतानां ग्रहणंचेत्कथं पंचवृत्तेः प्राणस्य प्रथक् ग्रहणम्? उच्यते, वायुकार्यतया न्तर्वायुमात्रं प्राणइतिसूत्रकारेण साधितम्? " नवायुक्रिये पृथगुपदेशादि " ति ।

"अन्योन्तर आत्मामनोमयः"-अत्रप्राचुर्यार्थोमयट् । मनोबुद्ध्य हंकारचित्ताख्यान्तः करणवृत्तिषु मननाख्यमनोवृत्तेः प्रचुरत्वात् । "तेनैषपूर्णः, सवाएषपुरुषविधएवं, तस्यपुरुषविधतां, अन्वयंपुरुषविधः" इति गतार्था । "तस्य यजुरेवशिरः" - अन्तःकरणस्य यद् वेदविषया वृत्तिश्शिरः । धर्मतत्वयाश्च चतुराश्रमादि प्रतिपादकंयजुरेवानेक

ऋग्दक्षिणःपक्षः, सामोत्तरःपक्षः, आदेशआत्मा;
अथर्वांगिरसःपुच्छंप्रतिष्ठा, तदप्येषश्लोकोभवति ॥

इत्यानन्दवल्ल्यां तृतीयोनुवाकः।

यतोवाचोनिवर्तन्ते, अप्राप्यमनसासह,
आनंदंब्रह्मणोविद्वान्, नबिभेतिकदाचनेति,

शाखम्। "ऋगुदक्षिणःपक्षः" - ऋग्वेदोहोत्रादिपरः, तद्विषयावृत्ति मनसोदक्षिणोबाहुः। "सामोत्तरःपक्षः" - सामवेदस्तु पित्र्यस्स्यादिति सव्यः पक्षस्साम। "आदेशआत्मा" तत्वमसीत्यवेहीति ज्ञापन रूपा तदंगतयायजेतेति प्रवर्तनरूपाच एवंविध सांगात्मज्ञान विधिविषयमनोवृत्तिः प्रधानभूतं मध्यशरीरभूतंच। "अथर्वांगिरसः पुच्छं प्रतिष्ठा" - अथर्वांगिरोभि र्दृष्टाश्चमन्त्रा अथर्वांगिरसः, शान्तिक पौष्टिक नानाप्रतिज्ञानशेषपराः, ब्रह्मत्वंचाप्यथर्वभिरितिच। "तदप्ये षश्लोकोभवति" - एवमखिलवेदावगाहिनिपुणं मनोमयंचाभि मुखी कृत्य श्लोकआम्नायते

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
आनन्दवल्ल्यां प्रथमोनुवाकः ॥३॥

(यतोवाचोनिवर्तते, अप्राप्यमनसासह, आनंदंब्रह्मणोविद्वान्, नबि भेति कदाचनेति) "यतः" - तयेशतमित्यनुक्रम्य निरतिशयदशा शिरस्कतयाभ्यस्यमानात ब्रह्मणआनंदात्। "वाचोनिवर्तते" - सैषानंदस्य

भूर्मा[illegible]भवतीति ब्रह्मानंदगणनायां प्रवृत्तावेदाः अवाग्निराहित्या देवा. [illegible]पश्यन्तो यानकुसुमवदेवावधिं मत्वा [illegible]मनोभि-स्सहावधिनंदृष्टेतिनिवर्तते । तमेव विधं ब्रह्मणआनंदमयस्यानंद । "विद्वान्" – 'न संदृशेतिष्ठतिरूपमस्य न चक्षुषा पश्यति कश्च नैनम्, हृदामनीषामनसाभिक्लृप्तो यएनं विदुरमृतास्तेभवति, 'न चक्षुषा गृह्यतेनापि वाचा' 'मनसातु विशुद्धेन' 'तस्मिन्नयं पुरु षोमनोमयः, अमृतोहिरण्मयः' 'मनोमयः प्राणशरीरो भारूपस्सत्य काम-उत्यसंकल्पः' 'मनएवमनुष्याणां कारणं बंधमोक्षयोः' 'चित येन्मुक्तयेतेन ब्रह्मभूतंपरेश्वरं' 'मनसाध्यानानिष्पाद्यस्समाधिस्तोभि धीयते' 'विद्यात्पुरुषंपर' मिति श्रुतिस्मृत्युक्त प्रकारेणकेवलं मन सैवाकलुषेण यजुरेवशिरइत्याद्युक्त श्रवणमननाद्यनुगृहीतेनविद्वान् । "नबिभेति" – अनादिजन्मसंचितेभ्यः पाप्मभ्यः । "कदाचन" – पुण्यपापयोर्निश्शेषमुन्मूलनात ।

एवमिन्द्रिय शब्दसकलप्रमाणैर्द्रष्टुमनर्हस्य ब्रह्मानंदमहार्णवस्य केवलं मनएवभक्ति सिद्धाञ्जनं दिव्यंचक्षुरिति मनोवैभवस्तोत्रंभवति । कृमिकीटनरकादिभयेन विवर्तमानस्यभवभयार्णवमग्नस्य जीवस्य निश्शे षपापनिवृत्ति पूर्वकपरमानंदप्राप्तिः केवलं मनआयत्तेति मनोमाहात्म्य मनन्यसाधारणमुक्तम् । तस्य यजुरेवशिरइत्यादिना मनसस्सांगस कलवेद श्रवणधारणादि सामर्थ्यमुक्तम् । साक्षिमंत्रेणतु परमात्मापरो क्ष्यसाधनत्व मुक्तमितिविभागः ।

अत्राह – "सत्यात्मप्राणारामं मनआनंद" मिति वचनात् ब्रह्म णोमनोवृत्तिरेवानंदमिति वृत्तिशब्देन तथाविधमनोवृत्तिर्वोक्तेति, तदे तदद्भुमकारदुष्टम् । प्रकृतमनः प्रकरणविरोधः, केवलंमनोमयस्य ब्रह्म

तस्यैषएवशारीरआत्मा, यःपूर्वस्य, तस्माद्वाएतस्मा न्मनोमयात् , अन्योंतरआत्माविज्ञानमयः, तेनैष पूर्णः, सवाएषपुरुषविधएव ॥ १ ॥

तस्यपुरुषविधतां, अन्वयंपुरुषविधः, तस्य

यत्वविरोधइत्यादि । इतिश्लोकस्तमानो । " तस्यैषएवशारीरआत्मा, यः पूर्वस्य " – उक्तानंदमहिमा प्राणसमष्टेश्शारीरआत्मैव एवंविध महानदि मायत्तमनोमयसमष्टेरपि शारीरआत्मा । यथाह ' यस्यमनश्शरीरं यस्य बुद्धिश्शरीरं यस्याहंकारश्शरीरं यस्यचित्तंशरीर ' मिति, ' इन्द्रियाणां मनश्चास्मि, बुद्धिर्बुद्धिमतामस्मी " ति । " तस्माद्वाएतस्मान्मनोमयात् "- ' कामस्संकल्पो विचिकित्साश्रद्धाधृतिस्मृति र्ह्रीरित्येतत्सर्वम्मनएवे," ति श्रूयमाणादंतःकरणचतुष्टय प्रधानान्मनोमयात् । " अन्योन्तर आत्मा विज्ञानमयः " – विज्ञानमयोजीवः, नबुद्धिमात्रं, मयट् प्रत्ययेन व्यति रेकप्रतीतेः । प्राणमयादौ मयडर्थ सम्भवउक्तः, उत्तरत्रच प्राचुर्यार्थ त्वं सूत्रोक्तं – " विकारशब्दान्नेतिचेन्न प्राचुर्या " दिति । अतोवि ज्ञानमयेपि विज्ञानवतो जीवस्य सम्भवान्नानर्थकत्वं न्याय्यं । बद्धो मुक्तश्च प्रत्यगात्माज्ञातेवेतिच सूत्रकारेणसाधितं – " ज्ञातएव " " या वदात्मभावित्वाच्च नदोष " इत्यादिना । ' नविज्ञातुर्विज्ञाते विपरि लोपोविद्यते " " विज्ञातारमरेकेनविजानीया " दित्यादिश्रुतिशतंच । आनन्दंब्रह्मणोविद्वानि ' ति मन आयत्तज्ञानोजीवः प्रस्तुतश्च, सो यमन्तःकरणादन्य इत्यत्रोच्यते कर्तृत्वं वक्तुम् ।

कथं तर्हि विज्ञानमयविषये परस्मिन् श्लोके " विज्ञानं यज्ञं तनुत " इति केवल विज्ञानशब्दोपादानमुपपद्यते ? ज्ञातुरेवात्मनस्स्वरूप मपि स्वप्रकाशत्वा विज्ञानमित्युच्यतइति नदोषः । ज्ञानैकनिरूपणी

श्रद्धैवशिरः, ऋतंदक्षिण-पक्षः, सत्यमुत्तरःपक्षः,

यत्वाद्य ...तुस्स्वरूपस्य । स्वरूपनिरूपकधर्मशब्दोहि धर्ममुखेनधर्मि स्वरूपमपि प्रतिपादयति, गवादि शब्दवत । " कृत्यल्युटोबहुळ " मितिवा कर्तरिल्युडाश्रीयते । नन्द्यादित्वमाश्रित्य ' नन्दिग्रही ' त्यादिना कर्तरिल्युट । अतएव ' विज्ञानं यज्ञं तनुते कर्माणि तनुते पिच ' ति यज्ञादिकर्तृत्वं विज्ञानशब्दवाच्यस्य श्रूयते । बुद्धिमात्रस्य नहि कर्तृत्वं सम्भवति, अचेतनेषु चेतनोपकरणभूतेषु विज्ञानमया ख्याविनेषु अन्नमयादिषु चेतनधर्मभूतं कर्तृत्वं नश्रूयते । अतएव चेतनमचेतनं च स्वासाधारणै निलयनत्वादिभि धर्मविशेषै विभज्या नन्दमयात्मकत्व वचनाय निदर्शयद्वाक्यद्वयं ' विज्ञानंचाविज्ञानंच ' ति विज्ञानशब्देन तद्गुणं चेतनं वदति । तथान्तर्यामिब्राह्मणे ' यो विज्ञानेतिष्ठ ' न्नित्यस्यस्थाने ' यआत्मनी ' ति पर्यायमधीयानामा ध्यंदिनाः काण्वपाठगत विज्ञानशब्दनिर्दिष्टं जीवात्मेतिस्फुटीकुर्वति । विज्ञानमितिच नपुंसकलिङ्गवचनं वस्तुत्वाभिप्रायं । यद्यपि विज्ञानं तनुतइत्यत्र ज्ञानमेवोपादीयते; तथाप्यन्योन्तर आत्माविज्ञानमयइति तद्वान् ज्ञातेवोपदिश्यते । यथा ' अन्नाद्वैप्रजाःप्रजायन्त इत्यत्रश्लोके केवलान्नोपादानेपि ' सवाएषपुरुषोन्नरसमय ' इत्यत्र नान्नमात्रं निर्दिष्टं, अपितु तन्मयस्तद्विकारः । एतमर्थं हृदिनिधायसूत्रकारो " भेदव्यपदेशाच्चे " त्याह । " तेनैषपूर्ण " इत्यादि "पुरुषविध" इत्यन्तं गतं । "तस्यश्रद्धैवशिरः"– स्वाभाविकज्ञानवृत्तिभेदः श्रद्धा, महाविश्वासपूर्विका भक्तिगर्भा भगवदुपासनोद्योगत्वराळक्षणाश्रद्धैवशिरः। ( ऋतंदक्षिणःपक्षः, सत्यमुत्तरःपक्षः) अत्रापि वृत्तिर्विवक्षिता । " आत्मप्रयत्नसापेक्षा विशिष्टायामनोगतिः । तस्या ब्रह्मणिसंयोगो योगइत्यभिधीयत " इति श्रीविष्णवपुराणे । " ब्रह्मणेत्वा महस ॐमित्यात्मानं युंजीते . " यात्मपरमात्मसम्बन्धैकाग्र्यं ध्यानंयोगः, आत्मा-प्रधानशरीरं । " स्वो

योगआत्मा, महःपुच्छम्प्रतिष्ठा तदप्येषश्लोको भवति ॥

इत्यानन्दवल्ल्यां चतुर्थोनुवाकः ।

विज्ञानंयज्ञंतनुत, कर्माणितनुतेपिच,

ज्ञीवनेच्छा यदि ते स्वसत्तायां स्पृहायदि । आत्मदास्यंहरेस्स्वाम्यं स्वभावश्चसदास्मर ।" इत्यादिस्मृतिशतं ( महःपुच्छंप्रतिष्ठा ) महइति तद्ब्रह्मेति पूर्ववचना दत्रापि सर्वधर्माश्रयभूत स्वप्रकाशभूतं, पुच्छम्प्रतिष्ठाच । योगं विरोधिनिरसन सामर्थ्यंवा महः । "ज्ञानं वैराग्य मैश्वर्यं धर्मंच मनुजेश्वर । आत्मनो ब्रह्मभूतस्य सहसिद्धंच तुष्टय" मितिभगवच्छौनकवचना दात्मस्वभाव विशेषाएवशिरः पक्षा दित्वेननिरूपिताः । एते आत्मगुणाइति हिप्रसिद्धाः । ( तदप्येष श्लोकोभवति ) श्रद्धापूर्वक ममृतमापकं योगं मोक्षार्थी विज्ञान मयएव अनुतिष्ठति, सच महच्छब्दवाच्य ब्रह्मैकरस स्वरूपएव, सच मुमुक्षुभि रुपास्यश्चेति सन्दर्शयद् स्पष्टश्लोकोभवति ।

इति कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
आनन्दवल्ल्यां चतुर्थोनुवाकः ॥४॥

( विज्ञानं यज्ञं तनुते ) उक्तोविज्ञानमयः पंचमहायज्ञादिकं ज्ञानायतनुते । " कर्माणितनुतेपिच " ति श्रूयमाणकर्तृस्वरूपविशे षोपस्थापकं । विज्ञानमितिपदं नाचेतनमन्तःकरणं वदति, मनोमय

विज्ञानंदेवास्सर्वे, ब्रह्मज्येष्ठमुपासते, विज्ञानंब्रह्मचेद्वेद, तस्माच्चेन्नप्रमाद्यति, शरीरेपाप्मनोहित्वा, सर्वान्कामान्समश्नुतइति, तस्यैषएवशारीरआत्मा, यःपूर्वस्य ॥ १ ॥

इत्यन्तःकरणस्य श्रद्धांगकपूर्वोक्तयोगस्य च कर्तरिसमवायात् ( विज्ञानं देवास्सर्वे ) देवाः – ज्ञानिनः । ( ब्रह्मज्येष्ठमुपासते ) प्रधानशब्दाभिलप्यादचेतनात् ब्रह्मणोज्येष्ठं विज्ञानमयमात्मानमुपासते । अविकारत्व कर्तृत्व भोक्तृत्व स्वाभाविक सत्यकामत्वादिभि रजडात्मप्राधान्यं । विज्ञानमात्मानं किमर्थ मुपासतइत्याह ( विज्ञानंब्रह्मचेद्वेद ) ब्रह्मदृष्ट्याब्रह्मात्मकतयावाविज्ञानं ब्रह्मयदि विन्द्यात् ( तस्माच्चेन्नप्रमाद्यति ) अन्तिमप्रत्ययपर्यंतं नप्रमाद्यतिचेत् । प्रमादसम्भवोप्युच्यते “ क्लेशोधिकतरस्तेषा मव्यक्तासक्तचेतसां । अव्यक्ताहिपरं दुःखं देहवद्भिरवाप्यते ” इति । ( शरीरेपाप्मनोहित्वा ) आत्मावलोकनविरोधि दुःखपापजातमपोह्यास्मिन् देहेवर्तमानः ( सर्वान्कामान् समश्नुतइति ) ब्रह्मदृष्ट्योपासकश्चेत् ऐहिकफलजातमश्नुते । आत्मावलोकनमात्रपरश्चे त्तदेवाश्नुते । तत्रच “आत्मरतिरात्मक्रीड आत्ममिथुनः आत्मारामः ” “ यस्त्वात्मरतिरेवस्यात् ” “ तद्वत्कामायम्प्रविशन्तिसर्वे ” इतिश्रुतिस्मृत्युक्तसर्वकामानश्नुते । इतिःश्लोकसमाप्तौ ( तस्यैषएवशारीरआत्मा ) सएषएवशारीरआत्माविज्ञानमयस्यापि शारीरआत्मा । तथान्तर्यामि ब्राह्मणे “ यआत्मनितिष्ठ न्नात्मनोन्तरोयमात्मानवेद यस्यात्माशरीरं यआत्मानमन्तरोयमयति ” तथा काण्वपाठे “ योविज्ञानेतिष्ठन् यस्यविज्ञानं शरीर ” मित्यादि। सुबालोपनिषदिच “ यस्याक्षरंशरीर ” मिति । आपस्तम्बश्च

तस्माद्वाएतस्माद्विज्ञानमयात् , अन्योंतर

" पुःप्राणिनस्सर्वंगुहाशयस्ये " ति । " सोभिध्यायशरीरात्स्वात् सिसृक्षुः विविधाःप्रजा " इति मनुः । " तदनुप्रविश्य, विज्ञानंचाविज्ञानंचे " ति वक्ष्यति । "गुहायां निहितोस्यजन्तोरि" तिच । ( तस्माद्वा एतस्मा द्विज्ञानमयात् । अन्योन्तरआत्मानंदमयः ) एवं स्वा भाविक श्रद्धासत्ययोग प्रकाशधर्मकतया यज्ञादिसकलकर्मकर्तृतया लोकवेद प्रसिद्धात् स्वभावतो विज्ञानप्रचुराज्जीवादन्योविलक्षणस्तद न्तर स्सूक्ष्मआत्मा आधारतयानियंतृतया शेषितया सर्वमाप्नोती त्यात्मा , अत आनन्दमयः - आनन्दैकतानः । " आत्माश्रुते " रित्यारभ्य जीवस्य उत्पत्तिविनाशराहित्यं ज्ञत्वमणुत्वं बहुत्वं प्रकाशादिवदंशत्वं चोक्त्वा, पक्षान्तरेषु दूषणानि चोक्तानि - अंतः करणस्य कर्तृत्वेभोक्तृत्वशक्तिरपितस्यैवस्यात् , तदा प्रकृतेरन्योस्मीति समाध्यनुष्ठानानुपपत्तिः, तत्फलाभावश्चेत्यादि ।

आनन्दमयस्य परमात्मत्वे चाष्टसूत्राणि " आनन्दमयोभ्यासात " "विकारशब्दान्नेतिचेन्नप्राचुर्यात । " "तद्धेतुव्यपदेशाच्च । " " मांत्रवर्णि कमेवचगीयते । " " नेतरोनुपपत्तेः । " " भेदव्यपदेशाच्च । " "कामाच्च नानुमानापेक्षा " " अस्मिन्नस्य चतद्योगंशास्ति । " इति । सूत्रार्थस्तु- " तस्माद्वाएतस्मादात्मन आकाशस्संभूत " इत्यारभ्य " तस्माद्वाएत स्माद्विज्ञानमयात् । अन्योंतर आत्मानंदमय " इत्यत्रजगत्कारणतया वगतआनन्दमयः प्रत्यगात्मनोर्थांतरभूतस्सर्वज्ञःपरमात्मैव, कुतः? " अभ्या सात् " - सैषानंदस्य मीमांसाभवती " त्यारभ्य " ते येशतं प्रजापते रानन्दाः, स एकोब्रह्मणआनन्दः, यतोवाचोनिवर्तन्ते, अप्राप्यमनसा सह, आनन्दंब्रह्मणोविद्वान् , नबिभेतिकुतश्चने " तीतिहि वयस्त्वेनायमानं दानवधिकातिशयोभ्यस्यते । तस्य च प्रत्यगात्मन्यसंभावितस्य तदतिरिक्तेपरमात्मन्येव संभवादानन्दमयःपरमात्मा । शारीरात्मत्वं च

परमात्मनमेव, "यस्य पृथिवी शरीर" मित्यारभ्य "एषसर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण:" इति श्रुत्यंतराभिधानात् । आत्मा शब्दानिर्देशाच्च । "आनन्दमयमात्मान मुपसंक्रामती"ति वेद्यत्वेन प्राप्यत्वेनात्मत्वेन ब्रह्मत्वेनानवधिकातिशयानंदत्वेन चानंदमयोभ्यस्यते । "स वा एष पुरुषोन्नरसमय इति" मयट्प्रकरणादानंदमयोपि विकारो भवितुमर्हति, अतोनानन्दमयः परमात्मेतिचाशंक्य परिहरति "विकारशब्दान्नेति चेन्न प्राचुर्यादि" ति । आनन्दमयइतिविकारार्थ मयडन्ताच्छब्दान्नायमविकृतः परमात्मा, अस्यच विकारार्थत्वमेवयुक्तम्, अन्नमयइति विकारोपक्रमादिति चेन्न,- प्राणमात्मन्यपि "नजायतेम्रियते" इत्यादिविकारप्रतिषेधा त्प्राचुर्यार्थ एवायंमयडिति निश्चयात् । अस्मिश्चा नन्दे "यतो वाचोनिवर्तन्त" इति वक्ष्यमाणात्प्राचुर्या दयमानंदप्रचुरः परमात्मैव । नह्यनवधिकातिशयः प्रकृतानंदः प्रकृतात्मानिसंभवति । "तस्माद्वाएतस्मादात्मन" इति अविकार आत्मा प्रकृतः, विकारार्थत्वंच प्राणमयएवपरित्यक्तम् । एतदुक्तंभवति- शतगुणितोत्तरक्रमेणाभ्यस्य मानस्य जीवात्माश्रयत्वासम्भवात् ब्रह्माश्रयोयमानन्दइति तस्मिन्ब्रह्मणि विकारासम्भवात्प्राचुर्येपि मयड्विधिसम्भवा दानन्दमयः परंब्रह्मेति । यदुक्त मानन्दप्राचुर्यं अल्पदुःखसद्भावं अवगमयतीति; तदसत्, तत्प्रचुरत्वंहि तत्प्रभूतत्वं, तच्चेतरस्यसत्तां नावगमति, अपितुतस्या ल्पत्वं निवर्तयति । इतरसद्भावासद्भावौतु प्रमाणान्तरावसेयौ । इहतु वाक्यशतेन तदभावोवगतः अपहतपाप्मेत्यादिना । तत्र एतावदेववक्तव्यं । ब्रह्मानन्दस्य प्रभूतत्व मन्यानन्दस्याल्पत्वापे क्षमिति । उच्यतेच "सएकोब्रह्मणआनन्द" इत्यादिना जीवान न्दापेक्षया ब्रह्मानन्दोनिरतिशयदशापन्नः प्रभूतइति । "तद्धेतुव्यपदे शाच्च ।"-"कोह्येवान्यात् कःप्राण्यात्, यदेष आकाशआनन्दोन स्यात्, एषह्येवानन्दयाती"त्येवं जीवानानन्दयतीति जीवानां आनन्दहे तुत्वं व्यपदिश्यते । अतश्चानन्दयितव्याज्जीवात आनन्दयितायं आन न्दमयः परमात्मेति विज्ञायते । आनन्दमयएवात्रा नन्दशब्दे नोच्यते

इतिचानन्तरमेव वक्ष्यते । इतश्च जीवादन्य आनन्दमयः– 'मान्त्रवर्णिकमेवच गीयते "–" सत्यंज्ञानमनन्तंब्रह्मे " ति मन्त्रवर्णोदितब्रह्मैवानन्दमयइतिगीयते । ननु जीवस्वरूपादन्यत्परंब्रह्म । तथाहि–ब्रह्मविदाप्नोति परमिति जीवस्य प्राप्यतया ब्रह्मनिर्दिष्टं. तदेषाभ्युक्तेति तद्ब्रह्माभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य ऋगेषाध्येतृभिरुक्ता । ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेनमन्त्रेण क्रियतइत्यर्थः । जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव ! प्रत्यगात्मनः परिशुद्धस्वरूप मन्त्रवर्णोदित नित्याशंक्याह – " नेतरोनुपपत्तेः " । परस्मात ब्रह्मण इतरः प्रत्यगात्मा मुक्तावस्थोपि न मन्त्रवर्णोदितः, तस्य विपश्चिताब्रह्मणेति विपश्चित्त्वानुपपत्तेः ' विविधं पश्यन्चित्त्वंहि विपश्चित्त्व । तच्च " सोकामयत बहुस्यां प्रजायेये " त्यादिवाक्योदित निरुपाधिकबहुभवनसंकल्परूपंज्ञत्वं । ननु प्रत्यगात्मनः परिशुद्धस्यापि नसंभवति, 'जगद्व्यापारवर्जं' मिति वक्ष्यमाणत्वात् । इतश्चोभयावस्थात्प्रत्यगात्मनोन्य आनन्दमयः – " भेदव्यपदेशाच्च " । " तस्माद्वाएतस्मादात्मन " इत्यारभ्य मांत्रवर्णिकं ब्रह्मव्यश्रयद्वाक्यं अन्नमाणमनाभ्यइव जीवादपि तस्यभेदंव्यपादिशति " तस्माद्वाएतस्माद्विज्ञानमयात् । अन्योन्तरआत्मानन्दमय"इति । अतोजीवात् भेदव्यपदेशाच्चायं मांत्रवर्णिक आनन्दमयान्य इति विज्ञायते । इतश्च जीवादन्यः –"कामाच्चनानुमानापेक्षा" । "सोकामयते " त्यारभ्य, " इदंसर्वमसृजत " ति कामादेदजगत्सर्ग श्रवणात् आनन्दमयस्य जगत्सर्गे नानुमानगम्यप्रकृत्यपेक्षा । प्रत्यगात्मनो यस्य कस्यचि दपि सर्गे प्रकृत्यपेक्षास्ति । अनुमानगम्यं प्रधानमनुमानं । इतश्चानन्दमयः प्रत्यगात्मनोन्यः परमात्मा–" अस्मिन्नस्यच तद्योगंशास्ति " । " रसोवैसः, रसंह्येवायंलब्ध्वानन्दीभवती " त्यस्मिन्नानन्दमयेरसशब्दनिर्दिष्टे अस्य इदंशब्दनिर्दिष्टस्य जीवस्य तल्लाभादानंदयोगंशास्तिशास्त्रम् । प्रत्यगात्मनो यल्लाभादानंदयोगः तस्मादन्य आनन्दः -परमात्मेति आनन्दमयः परंब्रह्म । " यदेष आकाश आनं

त्वात् ।" "विज्ञानमानंदं ब्रह्म" त्यादिष्वानन्दशब्देनानन्दमय रामृश्यते, यथाविज्ञानशब्देन विज्ञानमयः । अतएवानन्दं विद्वा निति व्यतिरेकानिर्देशः । अतएवानन्दमयमात्मान मुपसंक्रामतीतिफल निर्देशश्च । केवलानन्दशब्दस्याभ्यास इतियदुक्तं; तदनधीतवेदैरुक्तं, अस्मिन्ननुवाके अदर्शनात । उत्तरानुवाके चानन्दंब्रह्मेति आनन्दमय स्यैव प्रतिपादनं नानन्दमय व्यतिरिक्तस्य । एवं पूर्वानुवाकोक्तानां अन्नमयादीनां "अन्नंब्रह्मेतिव्यजानात" "प्राणोब्रह्मेतिव्यजानात्" "मनोब्रह्मेतिव्यजानात" "विज्ञानंब्रह्मेतिव्यजानात्" इतिप्रतिपादना तदनन्तरं "आनन्दोब्रह्मेति व्यजाना" दित्यत्राप्यानन्दमय एवेति हि सुस्पष्टम् । अतएव च आनन्दमयमात्मान मुपसंक्रम्येत्युपसंहृतम् ।

ननु "ब्रह्मपुच्छं प्रतिष्ठे" त्यानन्दमयादन्यत् ब्रह्मेतिप्रतीयते;- नैवं, ब्रह्मैवस्वभावविशेषैः पुरुषविधत्वेन रूपितशिरः पक्षपुच्छादिरूपेणव्यप दिश्यते । यथान्नमयो देह स्स्वस्मादनतिरिक्तैरेव स्वावयवैर्निदर्शितः । यदिह्यानन्दमयादन्य द्ब्रह्माभविष्यत "तस्माद्वाएतस्मादानन्दमयात्, अन्योन्तरआत्माब्रह्म" त्यपि निरदेक्ष्यत । नचैवं निर्दिश्यते, अतः प्रक्रान्तं ब्रह्मैवानन्दमयइति । ननु ब्रह्मशब्देनप्रक्रान्तस्य ब्रह्मशब्देन प्रत्यभिज्ञास्यात् । नैवत, 'ब्रह्मविदाप्नोतिपर' मिति ब्रह्मशब्देन पर मात्मनः प्रक्रमात । ब्रह्मशब्दः प्रथमंव्याख्यातः "सत्यंज्ञानमनन्तं ब्रह्मे" ति । अतएवपरमित्यात्मा तस्माद्वाएतस्मादात्मन इत्यात्मशब्देन निर्दिष्टः । अस्यसर्वानुप्रवेशात् सर्वान्तरात्मत्वेनात्मत्वं व्यजयद्वाक्य जातं प्राणमयादी नतिक्रम्यात्मशब्दमानंदमये समापयति । अतः आत्मशब्देन प्रक्रान्तं ब्रह्मैवानन्दमयइतिनिश्चीयते । तथाहि जगत्कार णत्वं जगदन्तरात्मत्वं चोभयमेवानन्यसाधारणं लक्षणम् । अतोनिखिल जगदेककारणतया प्रतिपादितस्यातिदूरस्य स्वात्मतया प्रतिपत्तिः प्रथमतो न स्या दिति सर्वात्मत्व प्रतिपत्त्यर्थं अन्नमयः पुरुष इतिप्रथमं आकाशादिभूतमयंशरीरं निर्दिश्य; तदनन्तरभूतं तस्य धारकं

आत्मानन्दमयः, तेनैषपूर्णः, सवाएषपुरुषविधएव,

इत्यादिविकल्प्यते । प्रियशिरस्त्वादिभ्य आनन्दादीनां विशेषमाह "इतरेत्वर्थसामान्यात्" । इतरे – आनन्दादयः, अर्थसामान्यात् – ब्रह्मस्वरूपसामान्यात्, ब्रह्मैव स्थांस्त्वनुवर्तन्ते, ब्रह्मस्वरूपनिरूपण धर्मत्वेन ब्रह्मस्वरूपसमानाहिते । प्रियशिरस्त्वादयो ब्रह्मस्वरूप धर्मा नभवन्ति चे तदभिधानं किमर्थमित्यत्राह – "आध्यानायप्रयोजनाभावात् ।" अनुचिन्तनार्थं तदभिधानं, प्रयोजनान्तराभावात्; ब्रह्म विदाप्नोतिपरमिति वेदितव्यतयोपदिष्टं ब्रह्म आनन्दप्रियमोदादि रूपेण विभज्य शिरःपक्ष पुच्छादित्वेन रूपयित्वा बुद्धावारोप्य मित्यर्थः । "आत्मशब्दाच्च"– अन्योन्तर आत्मानन्दमय इत्या त्मशब्दाच्च प्रियशिरस्त्वादयो नब्रह्मस्वरूपधर्माः, शिरःपक्षादयोहि नात्मधर्माः । "आत्मगृहीतिरितरवदुत्तरात् ।" – अन्योन्तरआत्मा नन्दमय इत्यात्मशब्देन परमात्मनएव गृहीतिः-ग्रहणं, इतरवत् आ त्मावा इदमेकएवाग्र आसीदित्यात्मशब्देन यथा परमात्मनो ग्रहणं तद्वत्, कथमवगम्यते ! उत्तरात् – सोकामयत बहुस्यां प्रजायेये तिवाक्यात् । "अन्वयादितिचेत्स्यादवधारणात्" । पूर्वेष्वन्यों तर आत्माप्राणमय इत्यादिवाक्येष्वनात्मस्वपि आत्मशब्दान्वयात् कथ मुत्तरवाक्या न्निर्णयइतिचेत ? "तस्माद्वाएतस्मादात्मनआकाशस्संभूत" इति प्रकृतस्यात्मनएव प्राणमयादि ष्वानन्दमयपर्यंते ष्वात्मशब्दे नावधारणा त्स्यादेवं निर्णयः । अतः प्रियशिरस्त्वादीना मनात्म धर्मत्वात् ज्ञानानन्दादीनां आत्मस्वरूपनिरूपणधर्मत्वाच्च तेषामेव सर्व त्रोपसंहारः । अत स्सूत्रकारानुमतत्वादानन्दमयः परमात्मैव ।

(तेनैषपूर्णः) तेनानन्दमयेनान्तर्यामिविशेषविज्ञानमयः आप्यायनेन व्याप्तः, पुलकोभवति । "सवाएषपुरुषविधएव" इत्यादि गतं ।

तस्यपुरुषविधताम्, अन्वयंम्पुरुषविधः, तस्यप्रियमेव शिरः, मोदोदक्षिणःपक्षः, प्रमोदउत्तर पक्षः. आनंदआत्मा, ॥ २ ॥

ब्रह्मपुच्छम्प्रतिष्ठा, तदप्येषश्लोकोभवति ॥

इत्यानन्दवल्ल्यां पञ्चमोऽनुवाकः ,

( तस्य प्रियमेवशिरः ) प्रियं दर्शनमात्रेण हर्षकरसुन्दरतरवस्तु विशेष विशेषवैचित्र्यसाक्षात्कारसुखं । तत्रचानन्ताश्चर्यमय स्वरूपरूप गुणविभूतिलीलोपकरणान्तर्गतानन्तवस्तु साक्षात्कारसुखमेव प्राथमिक मितिशिरः । ( मोदोदक्षिणःपक्षः ) – साक्षात्कृतस्य लब्धपक्षयानन्त रवाभिजनिताह्लादोमोदः । ( प्रमोदउत्तरःपक्षः ) लब्धस्यामतिहतानुभवितत्त्वतृप्तिः । यद्वा मोदादयस्तप स्तारतम्येनावस्थिताः सुखविशेषाः । वार्ताजनित सुखविशेषोमोदः, दर्शनजन्यः प्रमोदः । ( आनन्दआत्मा ) भोगसुखातिशयानिर्वृतिरानन्दः । इत्थ प्रियमोदप्रमोदानन्दाः प्रधानांगानि, मुक्तिविशेषस्य सुखार्थत्वात् ( ब्रह्मपुच्छम्प्रतिष्ठा ) अतस्सत्य ज्ञानानन्तरूपाणि पुच्छस्थानीयानि , अविकारत्वादिभि रानन्दाधायक इति तानि प्रतिष्ठाच (तदप्येषश्लोकोभवति) "असन्नेवसभवति असद्ब्रह्मेति वेद वेद्" " योवेदनिहितंगुहायां " " आत्मनआकाशस्सम्भूत " इति प्रस्तुत आत्मज्ञानमस्मिन्नानन्दमये प्रतिष्ठितमतोनातः परतत्त्वमस्तीतिभावः । उत्तरानुवाके चानन्दम प्रस्तुत्य वक्ष्यति " सैषाभार्गवीवारुणीविद्या, परमेव्योमन् प्रतिष्ठिता, यएवंवेद प्रतितिष्ठती " ति ।

इति श्री कृष्णनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

आनन्दवल्ल्यां पञ्चमोऽनुवाकः ॥ ५ ॥

विकल्पगर्भः प्रश्नः ।" विद्वान् कश्चन "– यः कोपि ब्रह्मज्ञः, स विरिञ्चिर्वादि वा सनंदनादिर्वा इन्द्रो वा हिरण्यगर्भो वा राव णो राक्षसो वा घण्टाकर्णः पिशाचो वा क्षत्रबन्धुः विदुरोवा गोपिका वा वैश्वानरो शूद्रो" येपि स्युःपापयोनयः। स्त्रियो वैश्यास्तथा शूद्राः"मातं गादपि कश्चन, विद्वांश्चेत् ? "अमुंलोकं"– परमव्योमेत्युक्तं परमात्म लोकं, सदासूरिभिर्निरीक्ष्यमाणम्, " प्रेत्य " स्थूलसूक्ष्मशरीरेंद्रियादि सर्वोपाधिविलयपूर्वकं गत्वा, आनंदमयं विपश्चितम्, किं गच्छति कुतः। एवं वाचनिकंप्रश्नद्वय इदंद्वयमिति अनुप्रश्नाइति बहुवचनोपप त्तिः। तत्रवाचनिकं प्रश्नद्वयं तयोत्याह(उ)। "उ" इत्यवधारणे, "तदेवभूतं तदुभव्यमाहितम्" " तदुचंद्रमा" इत्यादिवैकाप्यपात। एवं विधं परमात्मानं परमव्योमनिलय मांत्रवादि गम्यं शूद्रोपि ज्ञानीचेत गच्छति। एवं तत्रच सार्ष्टिस्य सारूप्य सायुज्यादिकं सर्वचलभते। नात्रसंशयः। " अस्माल्लो कात प्रेत्य"त्युत्तरवाक्य पूर्वतन "अमुंलोकं प्रेत्य"त्यनेन तत्सालोक्यमुक्तं। "आनंदमयमात्मानमुपसंक्रामती "ति तत्सामीप्यम्। "कामान्नीकामरूपी" विद्यमानरूपार्थं। "सोश्नुतेसर्वान् कामान् सहब्रह्मणा " "श्रोत्रियस्यचा कामहतस्य" इतितत्सायुज्यम्। "अहमन्नमहमन्नं, अहमन्नाद"इति सर्वंलभ्यते। अतो यःकश्चिदपि ज्ञानीचेत् मांत्रवर्णिकाक्षर परमव्योमाख्य ममुंलोकं गत्वा तमनंतस्वरूपं गुणविभवलीलोपकरणविशिष्टं व्याप्या नुभूयानंदमयलोकपर्यन्तानंदमयादिलोकानपि सर्वान् कामान्नीकाम रूप्यनुसंचरति वाढमित्यर्थः।

अथ यःकोपि केवलशास्त्रनिष्ठो ब्रह्मादिनिमित्तकारणमात्रेश्वर वादी च [ पशुपतिर्वा] परमाणुकारणवादिनः कणभक्षाक्षपादादयोवा निरवद्यानिर्वाच्य कर्मयोगनिष्ठोपि ब्रह्मज्ञानविधुरश्चेन्न गच्छति। का कथाऽन्यानो। तथाहि श्रुतिरुक्त " तमेवंविद्वानमृतइहभवति,नान्यः पन्थाअयना " " योवाएतदक्षरं गार्ग्यविदित्वा यजते तपस्तप्यते बहू निवर्षाणि अन्तवदेवास्य तद्भवति योवाअक्षरं गार्ग्यविदित्वास्माल्लोका प्रैति सकृपणः " " यआत्मानमनुविद्यविजानाति तस्य सर्वेषुलोकेषु

सर्वमसृजत. यदिदंकिञ्च. तत्सृष्ट्वा. तदेवानु प्राविशत . तदनुप्रविश्य ॥ २ ॥

इत्यत्रोभयं ब्रह्मैव " सोऽकामयत बहुस्यां प्रजायेये " तिस्रष्टुः ब्रह्मणः स्वस्यैव बहुभवनसंकल्पापरेशात् , विचित्र चिदचिद्रूपेणाह मेव बहुस्यां तदर्थं प्रजायेयेति संकल्पपूर्वकाहि सृष्टिरुपदिश्यते । प्राचीन जगत्संस्थानमालोच्यैव सृजतीतिश्रूयते "यथापूर्वमकल्पय" दि ति । ( सतपस्तप्त्वा ) " दध्यौमुहूर्तंधर्मात्मे " तिवत् क्षणं ध्यात्वा । अतीतकार्यवेदनात् । इदंसर्वमसृजत ) सृष्टस्य ब्रह्मा द्यधिकारहेतु कर्मज्ञानानुष्ठानविभाग क्षणं निश्शेषमालोच्य तथैव नि श्शेषमिदं सर्वमसृजत् । ( यदिदंकिंच ) अणुर्वा महद्वा ब्रह्मादिस्तंब पर्यंतं पावनमपावनं मंगळममंगळं स्वस्वरूपस्वभावापलापशीलं अति पातकि चण्डळाद्यतिपापिष्ठ वैषम्य नैर्घृण्यरहितं अनिर्दिष्टसाधनतया नुष्ठितकर्मानुरूप मनन्तविभागमसृजत । ( तत्सृष्ट्वातदेवानुप्राविशत ) एवं सृष्टिरेव महोपकारा. अथापि तत्राप्यपर्यवस्यन् कामातिशयेन तदे वहेयमहेयमित्यनालोच्यानुप्राविशत् । यथामृदनुवृत्तिर्घटादिकार्येषुयुगपत् , एवं सृष्टिवेळायामेवोपादानतयानुवृत्तो जातिवत्सर्वत्र पुष्कळप्रतीत्यर्हं श्च । अतएव प्रत्यभिज्ञार्होपि । अनुवृत्ततया प्रवेशोनुप्रवेशः । सर्वा नुकूलतया प्रवेशोवा । तत्तत्स्वरूपस्थितिप्रवृत्तिवृद्धीनामानुगुण्यायास्य प्रवेशः , प्रतिवस्तु प्रवेशोवानुप्रवेशः । तत्तत्कर्मेच्छानुगुण्येनप्रवेशोवा । ननु सर्वगतस्य किमिदानीं प्रवेशोनाम ? सर्वगतादाकाशात् तन्मध्ये कोयं वायोरुत्पत्तिविशेषः आकाशात्पृथक् वस्तुप्रतीत्यर्हः, एवं वायोः पृथग्भूतोग्निः, एव मनन्तविभागे परमात्मनोपि तत्र गोत्वस्यतवस्य गोत्वजातिवत् पुष्कळप्रतीत्यर्हास्थितिरंगीकरणीया, " यःपृथिव्यान्ति ष्ठन् " " योप्सुतिष्ठन् " इत्यादिश्रुतिबलात । (तदनुप्रविश्य) तत्रत्रा

पर्यवस्यन् [illegible] महर्षिः ( सच्च त्यच्चा भवत् [illegible] इत्यनु पपद - [illegible] पूर्वपूर्वोक्त [illegible]

[illegible] " " अश्व [illegible] " " [illegible] "

वेदान्त सामवेदोऽस्मि " इति सर्वत्राहं मनुवाकैरित्यर्थः । एवमनागतगुण सर्वजन्तु साधारणपोषण भोगोपकरणे वाङ्मनसाति तीतविभवोऽपि " नाहमनुपतेऽनि " " तस्य नाम महद्यशः " " न तोबन्धुर्जनिता स विधाता " " शान्तिसमुद्रमृतं " इति विश्वोपजी व्यस्वभावतया मत्सनुप्रवेश सर्वभावरयंत सर्वस्य ब्रूमिष्यतीतिनियमनादौ सकामः, किं पुनर्भक्तजनानुप्रवेश तद्भावादौ " भूतानां यः स्थविर पि ता " " पितामहस्य महतः " " पितॄणामपि तत्पिता " इत्युच्यमानः । " तस्मादन्नददव सर्वाण्येतानि ददात्यत्वात् प्राणास्मवन्ति भूतानाम्. " " आनन्दे ब्रह्मयोने " इत्यादिना भागवतजनलिप्सया सृष्टिरिति सृष्टिप्रयोजनं विस्तरेण वक्ष्यति । एव प्रागेव सकामस्सर्वभावेनास्थितः परमात्मा "ज्ञानीत्वात्मैव मे मत" मित्येवं भूतगुणविभवः स्वात्मनि चानुप्र विश्याह कुर्वाणः परंब्रह्मास्मीति तस्मात्सर्वमभवत् । एवं समस्तचि दचिद्वस्त्वनुप्रवेशेन सर्वात्मभूतस्य ब्रह्मण उपास्यत्वात् तत्क्रतुन्यायात् तथाऽवस्थितमेवाप्नुतइति सिद्ध । अत्रोपासात्रैविध्यमहंग्रहोपासनं चो च्यतइति भाष्यकारैरुक्तं - " जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रै विध्यादाश्रितत्वादिहतद्योगा " दित्यत्र । सूत्रार्थः " नवाचाविजि ज्ञासीतवक्तारंविद्यात् " " त्रिशीर्षाणंत्वाष्ट्रमहन अरुन्मुखान्यतीन् सा लावृकेभ्यः प्रायच्छ" मित्यादि जीवलिङ्गात्, "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः " " अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्यो

स्यापयती " ति मुख्यप्रमाणलिङ्गाच्च नात्यात्मतत्त्वनुमेति चेत्त्रु-
कृपात्वात्रैविध्यात्मो [illegible] रूपमुपदेष्टुं तत्तदनुसन्धानं ।
त्रिविधकारणभूतस्य ब्रह्मणः स्वरूपेणानुसन्धानं भोक्तृवर्गशरीरत्वेनानु
सन्धानं भोग्यभोगोपकरणशरीरत्वेनानुसन्धानं चेति त्रिविधमुपासन
मुपदेष्टुमित्यर्थः । तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्या
श्रितं । इहापि " सत्यंज्ञानमनन्तंब्रह्म " " आनन्दोब्रह्म " इत्यादिषु
स्वस्वरूपानुसन्धानं, " तत्सृष्ट्वा तदेवानुप्राविशत् " " सच्चत्यच्चाभ
वत्सत्यमभवत् " इत्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरी
रतयाचानुसन्धानं । एतदुक्तंभवति - यत्र हिरण्यगर्भादि जीवविशे
षाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मसाधारणधर्मयोग स्तदभि
धायिनांच शब्दानां परमात्मवाचिशब्दे सामानाधिकरण्यं दृश्यते, तत्र
परमात्मनः तत्तच्चिदचिद्विशेषणान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषित
मिति । एवं परमात्मनोनिरवधिकवर्धिष्णुत्वस्य प्रेमस्वभावतया निरू
पकाष्ठाप्यस्तीत्युपपादितं । कथं ? भगवदेकोपासनस्य सर्वलोकभावादि
व्याप्तिसम्भवइत्याशंकापरिहृता । 'तदनुप्रविश्य सच्चत्यच्चाभव'दित्यत्र स
मानकर्तृत्वश्रुत्या गांगिभावासिद्धेः तत्तदनुप्रवेशाय तत्तच्छरीरहेतुस्तत्त
द्भावहेतुरुक्तः । मुखान्तरेण सामानाधिकरण्य निर्वाहे श्रुतहान्यश्रु
तकल्पनाप्रसङ्गः । " सर्वं समाप्नोषिततोसिसर्वः " " सर्वगत्वा
दनन्तस्य" "सएवाहमवस्थितः" " अवस्थितेरितिकाशकृत्स्नः " इत्या
द्यविरोधश्च । " यआत्मनितिष्ठन् आत्मनोन्तरो यमात्मानवेदयस्यात्मा
शरीरं " " योक्षरमन्तरेसञ्चरन् यस्याक्षरंशरीरं एषसर्वभूतान्तरात्मा
पहतपाप्मादिव्योदेव एकोनारायणः " " अन्तःप्रविष्टश्शास्ताजनानां
सर्वात्मे " ति स्वशरीरभूते जीवात्मनि आत्मतयावस्थितः जीवशब्दे
न ब्रह्मप्रतिपादनमिति काशकृत्स्नाचार्योमन्यते । अस्मिन् जीवशब्दश्च
जीवस्यपरमात्मपर्यन्तस्यैववाचकः, नजीवमात्रस्येति पूर्वमेवोक्तं 'नामरूपे
व्याकरवाणि' त्यत्र । एवमात्मशरीरभावेन तादात्म्योपपादनपरस्यब्रह्मणो

तदप्येषश्लोकोभवति ॥

इत्यानन्दवल्ल्यां षष्ठोऽनुवाक

असद्वा इदमग्रआसीत् , ततोवैसदजायत.

किञ्चन " " नतदस्तिविनायत्स्यात " इति पयइव पित्तोपहतानां विश्वं जन स्वापिनां संसारिणां प्रतिकूलं, परमात्मापेक्षाया सर्वंजगत्सुख रूपमेव । तथाच " नरकस्वर्गसंज्ञेवै पापपुण्ये द्विजोत्तम । वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमायच " इत्यारभ्य " तस्माद्दुःखात्मकं नास्तिनच किंचित्सुखात्मक " मिति । अत एवंविध देवतासायुज्यं प्राप्य स्वयानन्द स्वयंदोषरहित स्सर्वसमभुतेच । नाहिदेवतान्तरव देशकालवस्तुपरि च्छिन्नस्वरूपईश्वरः । ( तदप्येषश्लोकोभवति )

इति कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने आनन्दवल्ल्यां षष्ठोऽनुवाकः ॥ ६ ॥

( असद्वाइदमग्रआसीत् , ततोवैसदजायत ) " इदं " भविष्यादि तमःपर्यन्ततत्त्वजातं ब्रह्मादिजीवजातंच । "अग्रे" सृष्टेः पूर्वकाले । " असदासीत " "ततः" पश्चात् विपश्चिदानन्दमयात । जातं "स जायत" । "वै" इतिसुबालोपनिषत् प्रसिद्धिप्रदर्शनम् । "नान्यत् किञ्च नमिषत्" "नैवेह किञ्चनाग्र आसीत " "तमःपरेदेव एकीभवति" "तद्धि ज्योतःपरंपदं " " एकोहवैनारायणआसीत् न ब्रह्मानेशानः " " अप हतपाप्मादिव्यो देवएकोनारायणः " " यस्मिन्निदंसंचविचैतिसर्वं " " यस्माज्जात नपरानैवकिञ्चन " " ससमाणाः प्रभवन्ती " त्यारभ्य

तदात्मानंस्वयमकुरुत. तस्मात्तत्सुकृतमुच्यतइति.
यद्वैतत्सुकृतं. रसोवैसः. रसंह्येवायंलब्ध्वानन्दी

"हिरण्यगर्भं पश्यत जायमानं" इत्युक्तं द्रष्टव्यम् । अतो देवतान्तरोपासक स्वतन्त्रस्सृष्ट्या तैरेवमुद्रा कश्चैव भवतीति भावः । परस्पर विचित्र विरुद्धानन्त प्रपञ्चस्य तर्हि किमुपादानकारणमित्याशङ्क्य केवलं सत्यज्ञानादिलक्षणमस्यात्मैव सर्वविधकारणमित्याह (तदात्मानं स्वयमकुरुत) तद् सत्यं ब्रह्म आत्मानमशेषोपादानतया स्वीकृत्य सत्यसंकल्पत्वाद्यनन्तगुणतया निमित्तकारणमपि स्वयम्भूत्वा निखिलजगदाकारेणानन्दमयं स्वात्मानमेव स्वयमकरोत् । "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इति भूतसृष्टिक्रमेणोक्तं । एवं सति सर्वथा दुस्संभोगप्राप्त्यादि दोषप्रसंगइत्याशंक्य परिहरति ( तस्मात् सुकृतमुच्यतइति ) "तथाजोऽवदन्नेव" "बहुधा विजायते. तस्य धीराः परिजानन्तियोनिं" "स उ श्रेयान् भवतिजायमानः . तन्धीरासः कवयउन्नयन्ति "तस्माद्विराडजायत" इत्यारभ्य "वेदाहमेतंपुरुषम्महान्तं" "नास्य वेद न कश्चन" "अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते । इतिमत्वा भजन्ते मां बुधाभावसमन्विताः" "अव्यक्तंव्यक्तिमापन्नं मन्यन्तेमामबुद्धयः" "जन्मकर्मचमेदिव्यमेवंयोवेत्ति तत्वतः । त्यक्त्वादेहं पुनर्जन्म नैतिमामेति सोऽर्जुन" इति । "लोकवत्तु लीलाकैवल्य मितिच ब्रह्मसूत्रं । एवं ब्रह्मविद्भि स्तस्मात् तत्सुकृतमुच्यते । इतिश्लोकसमाप्तौ । एवं विधस्यस्वात्मनएव वैश्वरूप्येण निर्माणसामर्थ्यं नान्यस्यास्ति । "तेध्यानयोगानुगता अपश्यन् देवात्मशक्तिंस्वगुणै र्निगूढां" "ब्रह्मणस्त्वास्तु सर्गाद्याभावशक्तयः । भवन्तितपतांश्रेष्ठ पावकस्य यथोष्णता" "समस्ताश्शक्तयश्चैता नृपयत्रप्रतिष्ठिताः" इतितस्यैवास्ति ।

एवं निखिलजगन्मयं कार्य मनुभवतएव परमानन्दः नैव कारणं ब्रह्मानुभवत इत्यतआह ( यद्वैतत्सुकृतं, रसोवैसः, रसंह्येवायं लब्ध्वानन्दीभवति ) प्रधानादिविशेषान्तं तज्जातं हिरण्य

जीवजातञ्च स्वात्मनैव ... कामीदिव लीलया चकार, ... कामनया वितत्य समागतं मुमुक्षुर्लब्ध्वानन्दीभवति । उभ ... रागोपि भवत् ! ' वे" प्रसिद्धो । " नतु" सर्व वेदवेदांत महर्षि ... त्मतस्त्वाच्छन्दं अचिन्त्य दिव्यलीलाप्रवृत्त निश्शेषानन्दाश्चर्यमयनिखि ... जगदेककारणभूतस्वात्मनैव कृतं । " रसोवैसः" किमुत्याद्य कारणवादी? ... ज्ञानवाक्ये प्यानन्दमयादि शब्दाः प्रयुक्ताः । कार्यान्तरात्मतयैवा नन्दमयोरस इत्युच्यते । अतःपरममूर्तं कारणं ब्रह्म तस्य रसो ... निष्कृष्टो निष्पन्दभावः कार्यात्मनावस्थितं ब्रह्मेतिरसएवेत्युक्तः । अविद्याकर्मवासनादि परतन्त्रतया स्वपरपूर्वापरावस्था परिज्ञानेन स्वकर्मभि र्गळेपर्यवसकः " तेयेनजीवान् व्यससर्जभूम्यां । य दोषधीभिः पुरुषान् पशूंश्च विवेशभूतानिचराचराणि " त्यनुप्रविष्ट नानेन कृतत्वा जीवानां दुष्कृतवशेन न कथंचिदपि दुष्कृतत्वर्ष भवः । अयमेकएवसुकृतः । तस्यामवस्थायां परमलीलानन्दाधि क्या त्परमसारभूतः । अनएनं "लब्ध्वा अयं"जीवआनन्दीभवति । हिरण्य गर्भादि सायुज्येतु " गत्वागत्वानिवर्तते " ' गतागतंकामका मालभन्ते " इति निष्कर्षे केवलदुःखलाभएवेत्युच्यते । अतोनिखिल विकारपुरुषार्थमय प्रपञ्चात्मकतया वस्थितं ब्रह्म तुभवतो पुरुषार्थ सम्भवइत्याशंकापि दूरोत्सारिता । उक्तं भूमविद्यायामपि " नप श्योमृत्युम्पश्यति नरोगं नोतदुःखतां । सर्वंह्यपश्यः पश्यति सर्व माप्नोतिसर्वशः " इति । वैश्वानरात्मविद्यायामपि – " ससर्वेषु लोकेषु सर्वेष्वात्मस्वन्नमत्ती " ति । दहरविद्यायाश्च " तस्य सर्वेषु लोकेषु कामचारोभवती " त्यादिकं । " इमान्लोकान् कामान्नीकामरूप्यनुसंचर " न्नित्यस्यामेव विद्यायां वदति । अत स्संकल्पमात्रेण निश्शेषकार्यानुप्रवेशाद क्लेशकर्मविपाकाशया परामृष्ट तया " अजोपिसन्नव्ययात्मे " त्यजहत्स्वभावतयाच कारणरूप मप्यस्ति । इदमेवानन्तलीलत्वमिति रसं ह्येवायं लब्ध्वा ज्ञानी यावदात्मसत्तमानन्दी भवति ।

सम्सारमध्ये परमात्मन स्तानुरागस्यैवानुभवशोहि-तुकंअवरः । तृषितस्य मरुभूमिपानीयवत् मरुपाद्रूपायिकस्यं सच्छायिकाभं अन्धकारप्रविष्टस्य आलोकवत् आतुरस्य दिव्यौषधवत् पूर्वमहाब्धि नमग्नस्य यानपात्रवत् वनगहन प्रविष्टस्य देशिकदर्शनवत् वृषाग्नि क्लिष्टस्योपरि अनभ्रामृतासारवत् तापत्रयानलसंकुल भवमहार्णवनिम ग्नस्य हृदयं सदयमनुप्रविष्टः । एवं सकामं हृदयगुहाया मागत्यापि स्थितं भक्तिश्रद्धासमन्वितएवोपासीत ।

किं च कटकमकुटादयलंकाराणामेव भोग्यता, नकनकमात्रस्य, "रसोवैसः" अत्यंत भिन्नानन्तविचित्र रूपाणां सर्वजीवाना प्रविश्यान्न, भवसंभवे परमानन्दसंभवः । "वै" इति सकलश्रुतिस्मृतीति हासपुराण प्रसिद्धिः । ऋक्षवानर गोलांगूलगृध्रादय "स्वेषसर्वं परित्यज्य राम मेवान्वयुस्तदा ।" "अलमद्यहिभुक्तेन" "सर्वलोकप्रियोरामः" "रामः कमलपत्राक्ष स्सर्वसत्वमनोहरः" "अमृतस्येव नातृप्य" न्नित्यादि । आत्मजेष्वेवंविध स्नेहइति किमत्राचित्रं ।

( आत्मानं स्वयमकुरुत ) "अंगादंगात्संभवसि" "आत्मावैपुत्र नामासि" । एवं स्वातन्त्र्य काष्ठा, वात्सल्य काष्ठा, आनन्दस्य काष्ठा, सकलेतरसहकार्यादिनैरपेक्ष्य काष्ठा निरतिशय भोग्यत्व काष्ठा अनन्त ज्ञानादिगुणानां नैसर्गिकत्व काष्ठाच प्रतिपादिता । तदितरस्य सर्वस्य निश्शेषेणासत्वाविशेषश्च प्रतिपादितः । स्वयमेवनिरतिशय पुत्रस्नेहेन सर्वत स्ताहिष्यति चे दितस्सरसरूपोभवेत नवेत्याशंकाच परिहृता ( रसोवैसइति ) निमित्तसमवायिकार्यादि कारणान्तरं स्वल्पं कल्पमपि तदानीं नासीत् , केवलमात्मनैवात्मानमकुरुतेत्यत्रा नन्त सर्वमंगलगुणजातमुक्तम्भवति । अगणितगुणदोषतया निश्शेषजगत्सर्गं निश्शेष तदनुप्रवेश तदध्यक्षत्व निश्शेष निखिलभाव दातिनैसर्गिकं सौहार्द तत्र प्राधान्येनोक्तं । आत्मानंस्वयमकुरुतेति कार्यकारणयो रनन्यत्वं चोक्तं । अत एक विज्ञानेन सर्वविज्ञानं च ।

तेयेशतंमानुषाआनन्दाः, सएकोमनुष्यगंध
र्वाणांमानन्दः, श्रोत्रियस्यचाकामहतस्य, तेयेशतं

( तेयेशतं मानुषाआनन्दाः सएकः मनुष्यगन्धर्वाणामानन्दः )
" ते " मनुष्यानन्दाएव । " येशतं " शतगुणिताः । " स मनु
ष्यगन्धर्वस्य " वेदरहस्यग्रन्थवा ' वीणावादनतत्त्वज्ञः श्रुतिविद्याविशारदः । तालज्ञश्चाप्रयासेन ' ति संगीतवाद्यादिरहस्यज्ञस्यवा । यद्वा मनुष्यास्सन्तः विद्याकर्मविशेषात् गन्धर्वत्वं प्राप्ताः मनुष्यगन्धर्वाः । ते ध्यानादिशक्तिसम्पन्नाः तेषां मनुष्यगन्धर्वाणा मानन्दः ।

(श्रोत्रियस्यचाकामहतस्य) "श्रोत्रियस्य" शास्त्रदृष्ट्यात्मदर्शी' इति शास्त्रेकदृष्टेः एवं निरतिशयदशाविरस्कानन्दमयं जगत्कारणं सर्वात्मभूतं सर्वज्ञं स्वात्मनोऽपि आत्मतयानुभवतो न पदानिक्षुद्रं देवेन्द्रत्वादिकं पदमितिच जानतः । ' जगद्व्यापारवर्जमविभागोऽविद्या ' इत्युच्यते, किं पुनः नित्यशरीरशरीरिणोः रात्मपरमात्मनोः । ' अविभागेन दृष्टत्वा ' दितिसूत्रं । किमयं मुक्तआविर्भूतस्वरूपः प्रत्यगात्मा परं ब्रह्म स्वात्मनो विभक्तमनुभवति ? उतस्वात्मनोऽप्यात्मतया ऽविभागेनाहं ब्रह्मास्मीति ? इति संशयः । ' निरंजनः परमं साम्यमुपैति ' ' सोऽश्नुते सर्वान् कामान् सहब्रह्मणा विपश्चितेति ' ' इदंज्ञानमुपाश्रित्य ममसाधर्म्यमागता ' इति श्रुतिस्मृतिभ्यो विभक्तमनुभवतीति पूर्वपक्षः । सिद्धान्तस्तु ' सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वं, तत्त्वमसी ' त्यादि सामानाधिकरण्यैः " यः पृथिव्यांतिष्ठन् यस्य पृथिवीशरीरं, यआत्मनितिष्ठन् यस्यात्माशरीरं ' मित्यादिषु सर्वस्य चिदचिद्वस्तुनः ब्रह्मशरीरतया ब्रह्मप्रकारत्वेन तत्तद्वस्तुवाचिशब्दास्तत्पर्यन्त विषयाइत्यवगम्य ' आत्मेति तूपगच्छन्ती ' तिन्यायेन स्वात्मनो ऽप्यात्मतया अहंब्रह्मास्मीत्युपासनेन यथावस्थित परमात्मात्मकतया स्मनो ब्रह्मत्व गुणे स्वसाधर्म्यं प्रतिपादयति। ' सर्वान् कामान् सहब्रह्मणाऽवि

मनुष्यगन्धर्वाणामानन्दाः, सएकोदेवगंधर्वाणामान
दः, श्रोत्रियस्यचाकामहतस्य, तेयेशतंदेवगंधर्वा
णामानंदाः, सएकःपितॄणांचिरलोकलोकानामा

पश्चिते ' ति ब्रह्मशरीरतया ब्रह्मप्रकारभूतत्वात् स्वात्मभूतेन ब्रह्मणा
सहनन्दुगानुभवतीति वदति । कल्याणगुणविशिष्ट ब्रह्मानुभवतात्पर्यः ।
अतो गांगिनो रेकफलत्वा त्परमात्मसमृद्धिं स्वसमृद्धिमेवानुभवति ज्ञा
नी । स्वसमृद्धिवादश्च " एतेषयं सर्वसमृद्धि कामाः लोको
जनस्यास्यपदेष " इत्यादिश्रुतिब्राह्मणञ्च । ननु ' स एकोमानुष आनन्दः
श्रोत्रियस्याचाकामहतस्य ' इतिकिमाधीतं? उच्यते । मानुषानन्दस्या
समाप्तत्वात् । गन्धर्वसुखपर्यन्तोहि मनुष्यानन्दः पुष्कलोभवति ।
तर्हि तत्र विभज्यवचनंकिमर्थं? सर्वपर्यायेषूक्ता स्तज्ज्ञानबलैश्वर्यादि गुणा
नन्दा स्सर्वं एवंकृतः वत्तल्लोकवर्तिगंधर्वानुभवानन्द एकवइति प्रदर्शनाय
प्रथमपर्यायएवविभाग उक्तः ।

( तेयेशतं मनुष्यगंधर्वाणामानन्दाः ) एवं सर्वैश्वर्यादि गुणपू
र्णमनुष्य गन्धर्वाणां शतस्य य आनन्दास्तत्समूह, " स एकः " " देव
गंधर्वाणां " अन्तरिक्षलोकवासिनो देवयोनयस्सर्वे देवगायका
गंधर्वाः, तेषाम् । एतेन देवानामुपकरणभूतसिद्धाप्सरःप्रभृतीनां माया
साळसमलोकवासिनां देवोरगादि देवयोनिभेदानांचा ऽऽनंदोप्युक्त
प्रायएव । ( श्रोत्रियस्यचा कामहतस्य ) ।

( तेयेशत देवगंधर्वाणामानंदाः सएकः पितॄणां चिरलोक लोकाना
मानन्दः ) चिरस्थायी लोको येषां प्रह्लसुतानां देवयोनिभेदानां लोकोभ
वति । ( श्रोत्रियस्यचा कामहतस्य )

नंदः, श्रोत्रियस्यचाकामहतस्य, तयेशतंपितॄणांचिरलोकलोकानामानंदाः, ॥ २ ॥

सएकआजानजानांदेवानामानंदः, श्रोत्रियस्यचाकामहतस्य, तेयेशतमाजानजानांदेवानामानंदाः सएकःकर्मदेवानांदेवानामानंदः, येकर्मणादेवानंपियंति, श्रोत्रियस्यचाकामहतस्य, तेयेशतंकर्मदेवानांदेवानामानंदाः, सएकोदेवानामानन्दः, श्रोत्रियस्यचाकामहतस्य,तेयेशतंदेवानामानन्दाः ॥३॥

सएकइंद्रस्यानन्दः, श्रोत्रियस्यचाकामहतस्य,

तेयेशतं पितॄणां चिरलोकलोकाना मानन्दाः, सएक आजानजानां देवानामानन्दः श्रोत्रियस्यचाकामहतस्य; शतमाजानजानां देवानामानंदाः, सएकः कर्मदेवानां देवानामानन्दः ) कर्मदेवान् स्वयमेवव्याचष्टे ( येकर्मणादेवानपियन्ति ) "ये" यागादि कर्मणात्रयस्त्रिंशद्देवान् गच्छंति। ब्रह्माणिलयवत् देवेष्वपि लयोदेवत्वप्राप्तिः। पूर्वस्थूल रूपत्यागात्म कोत्तर सूक्ष्मावस्था लयः। तेयथाति मनुष्याः। ( श्रोत्रियस्यचा कामहतस्य, तेयेशतं कर्मदेवानां देवानामानन्दाः, सएको देवानामानन्दः। ) वस्वग्निरुद्रादित्य रूप त्रयस्त्रिंश द्देवतानाम्। ( श्रोत्रियस्यचाकामहतस्य, तेयेशतं देवानामानन्दाः, सएकइन्द्रस्यानन्दः, श्रोत्रियस्यचा कामहतस्य ) तल्लोकवासिनो कामहतश्रोत्रियस्य तत्समानैश्वर्यं प्राप्नोतीति सर्वत्रयोज्यम्।

सयएवंवित् , अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मान मुपसंक्रामति, एतंप्राणमयमात्मानमुपसंक्रामति, एतं मनोमयमात्मानमुपसंक्रामति, एतंविज्ञानमयमात्मा नमुपसंक्रामति ॥५॥

एतमानन्दमयमात्मानमुपसंक्रामति, तंदप्येष श्लोकोभवति ॥

इत्यानन्दवल्ल्यां अष्टमोनुवाकः ।

---

देवानीच न विशेष इति दर्शितं । सयश्चायं पुरुषे यश्चासावादि त्यइत्युभयत्रचशब्देन जातिवत्परिहराप्य वर्तमानत्वमुक्तम् ।

अत्र सावित्र्युपदेशश्च पुष्कलः । तथाहि । सयश्चायं पुरु षे, धियोयोनः प्रचोदयादितिचैकार्थं । यश्चासावादित्ये तत्सवितुर्व रेण्यं भर्गोदेवस्यधीमही त्युभयमेकार्थं ।

( सयएवंवित् ) अतिदिष्टस्य पुण्डरीकाक्षस्यो पासनार्थं पूर्वोक्तोपासकश्च परमव्योमहृदययो रुपासनं उक्तरूपाविशेषेणयःकु रुते । " अस्माल्लोकात्प्रेत्य " तच्छब्दस्यानुषंगः । अमुंलोकं प्रेत्येति चानुवर्तते । तदीत्युक्तश्चार्चिरादिमार्गः । ( एतमन्नमयमा त्मानमुपसंक्रामति ) पूर्ववत् । ( एतं प्राणमयमात्मान मुपसंक्रा मति, एतंमनोमयमात्मान मुपसंक्रामति, एतं विज्ञानमयमात्मानमुपसं क्रामति, एतमानन्दमयमात्मानमुपसंक्रामति ) अन्तःकरण चतुष्टया त्मानं स्वात्मानं । एवं चतुर्विंशतितत्त्वातीत- एतं विज्ञानमय

तोवाचोनिवर्तते, अप्राप्यमनसासह, आ
नंदंब्रह्मणोविद्वान् , नबिभेतिकुतश्चनेति, एतं

[illegible]नार्म, उपसंक्रामति । बहुमुक्तरूपं सर्वं । अथ "एतमा
नन्दमयमात्मानमुपसंक्रामति " मान्त्रवर्णिकं परमव्योमनिलयं पर
[illegible]कारणं । उपसंवेशन मुपक्रमणं तदनुभवानन्दकाष्ठा । यथा भूमवि
[illegible]यो " नपश्योमृत्युंपश्यति नरोगंनोतदुःखतां । सर्वंह पश्यःपश्यति
सर्वमाप्नोति सर्वश स्सस्वराड्भवति तस्य सर्वेषु लोकषु का
मचारोभवति नान्यत्पश्यति नान्यत शृणोति सभूमा " इति । "तदपि"
आनंदमयमात्मस्यानवच्छिन्नानंदानुभववैशद्याय श्लोकः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

आनन्दवल्ल्यां अष्टमानुवाकः ॥ ८ ॥

---

( यतोवाचोनिवर्तते, अप्राप्यमनसासह, आनंदंब्रह्मणोविद्वान् ,
नबिभेति कुतश्चनेति ) पूर्वमेवव्याख्यातोयम् ।

कश्चिदाह " वाङ्मनसयो निवृत्तिवचनेन निर्विशेषत्वं प्रतिपा
द्यत " इति ।

तदसंगतम् । " यतोवाचोनिवर्तन्ते " इतिवाक्यं यदिवाङ्मन
सयो ब्रह्मणोनि[illegible]त्तिमर्थाते,ततोनिर्विशेषतांब्रह्मणोवगमयितुं नशक्नुयात् ।
किंतु वाङ्मनसयो स्तत्र प्रमाणतांवदेद् । तथाच्यनिरुपाख्यत्वमेव ।
[illegible]ति परं 'मित्यारभ्य ब्रह्मणः परम प्राप्यत्वं यथार्थं निर[illegible]
विश्चयानंत्यं विपश्चित्त्वं जगत्कारणत्वं आनंदैकतानत्वं तादृशान् प्रत्या
[illegible] [illegible]ज्ञानविषयत्वं [illegible]कामादेर्विचित्र
[illegible] सर्वस्य स्रष्टृत्वं [illegible]प्रवेशाकृततदात्मकत्वं

इवावनतपति, किमहँसाधुनाकरवं, किमहंपाप:

शतगुणितोत्तरक्रमेण चतुर्मुखाद्युपरिनिरतिशयानंद सर्वप्रकारानंदमयत्वं अन्यच्चानेकमंगळं प्रतिपाद्य अथ वाङ् मनसयो ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणं ब्रह्मेत्युच्यत इतिभ्रान्तजल्पितम् ।

किंच "यतोवाचो निवर्तन्त" इतियच्छब्दनिर्दिष्टं "आनन्दं ब्रह्मणोविद्वा" निति आनन्दशब्देन निर्दिश्य तस्य ब्रह्मसम्बन्धित्वं "ब्रह्मण" इति व्यतिरेक निर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं "विद्वान् न बिभेती" ति पुनरपि तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्य वदनर्थकंचाम्नातं स्यात् ।

तर्हि कोर्थः ? उक्ते हेतुभि श्शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्य सातिशयेयत्तां वक्तुमुपक्रम्य तस्येयत्ताया अभावादेववाङ्मनसयो स्तन्नि वृत्तिरुच्यते "यतोवाच" इति । एवमियत्तारहित ब्रह्मानन्दंविद्वान् कुतश्चननबिभेतीति सर्वंसामञ्जस्यम् ।

किंचास्य मांत्रवर्णिकस्य विपश्चितः "सोकामयते" ति स्वसं कल्पाज्जगज्जन्मास्थिति जगदंतरात्मत्वादे रुक्तत्वात् मुक्तान्यस्वरूपान्यत्वं सुस्पष्टमेव ।

साक्षिश्लोकगतं "नबिभेति कुतश्चनेती"त्यं शंव्याचष्टे (एतंहवावन तपति) "एतं" आनन्दमये लब्धप्रतिष्ठम् । "नतपति" वक्ष्यमाणं । "वाव" अवधारणे । हेतिप्रसिद्धौ । "यथातूलमग्नौ" "पुष्करपलाशआप:" "उत्तरपूर्वाघयोरश्लेषविनाशौ" । मुक्तस्य कुर्यान्नकुर्यादि त्युभय विधानुशासनाविषयत्वा त्परमात्मनिमित्तमेव भयंनास्ति, अतो न्यस्मात्परस्पर वैरादिकृतं भयंचनास्ति, सूरीणामविद्याद्यभावात्, "कामान्नीकामरूपी" तिवक्ष्यति । "अथतस्य भयंभवती" ति पूर्वं प्रस्तुतं भयमप्यत्रैवव्याख्यातं । (किमहं साधुनाकरवं किमहं पापमक रवमिति) क्रियानिषिद्धमकरवमितिभयम् । नतपतीति पूर्वेण संबंध:

भकरवमिति,सयएवंविद्वानेतेआत्मानँस्पृणुते,उभेह्येवैषएतेआत्मानँस्पृणुते, यएवंवेद, ॥ इत्युपनिषत् ॥

इत्यानन्दवल्ल्यां नवमोनुवाकः ।

इत्यानन्दवल्ली समाप्ता ।

"अवश्यमनुभोक्तव्य"मिति अकृत प्रायश्चित्ता ब्रह्मज्ञोभयविषयम् । अतो नादिसंचित पापानुभवभयंनास्ति ।

एवं परब्रह्ममाहात्म्यकृतं स्वमाहात्म्यमपि ध्येयमित्याह ( सय एवं विद्वानेते आत्मानं स्पृणुते ) य एवं विद्वान् स " एते " एताभ्यां, " आत्मानं " " स्पृणुते " रक्षति । पुण्यपापफलानुभवभयाद्रक्ष्यतीत्युक्तेः फलानुभवोनास्तीत्युक्तं भवति । " उभेह्येवैषएते आत्मानं स्पृणुते, य एवं वेद " पुनर्वचनं पुण्यपापविधूनन ध्यानज्ञातस्य तात्पर्यद्योतनाय निस्संशयत्वाय च । पुण्यस्यापि निरतिशयस्य विधूननज्ञापनाय च । अनुवाक समाप्तिद्योतनाय च । " इत्युपनिषत् " इत्थमत्द्भुतं परम रहस्योपदेशराहित्व तादृशाय न वक्तव्यः । यथाह " इदन्तेनातप स्काय नाभक्ताय कदाचन । नचा शुश्रूषवेवाच्यं नचमांयोभ्यसूयति ॥ य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिमयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ नच तस्मान्मनुष्येषु कश्चिन्मेप्रियकृत्तमः । भविता नचमेतस्मा दन्यः प्रियतरोभुवी " ति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने आनन्दवल्ल्यां नवमोनुवाकः ॥९॥

ब्रह्मविदिदमयमिदमेकविंशतिः रसप्रदक्षरसमयः प्राणोव्यानोपानआकाशः पृथिवीपुच्छंषड्विंशतिः प्राणं यजुरृक्सामादेशोथर्वांगिरसःपुच्छं द्वाविंशतिर्यतश्श्रद्धर्तंसत्यं योगोमहोथादशविज्ञानंप्रियं मोदः प्रमोदआनन्दो ब्रह्मपुच्छं द्वाविंशतिरसन्नेवाथाष्टाविंशति रसश्षोडश भीषास्मान्मानुषोमनुष्यगन्धर्वाणां देवगन्धर्वाणां पितृणां चिरलोकलोकानामाजानजानां कर्मदेवानां येकर्मणा देवानामिंद्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणस्सयश्चसंक्रामत्येकपंचाशद्यतः कुतश्चनैतमोकादशहृदि ॥९॥(ब्रह्मविन्नव )

---

## ॥ अथ भृगुवल्ली ॥

एवं ध्येयरूपं सर्वं विविच्य प्रतिपाद्य वाचकेषु प्रणवस्य प्राधान्यमंगांगि भ्वनुवृत्तत्वं चोक्तं । प्रणवानन्तरं स्वाध्यायप्रवचनयोश्च महाभागवतमुद्गलकुलतिलकस्यमतं सर्वर्षिपरिषदनुमतश्चेतिगदितं । समाधिवेळायां मुक्तिवेळायाश्च त्रिशंकुमहर्षेः स्वप्रभावानुभववचनमाप्यवाचकं समाप्तं । अनन्तरं वेदमन्त्रस्यविविधां गतया कायिकेषुपादेयंच विविच्योक्त्वा सत्यस्वाध्याय प्रवचनादीनां अवश्योपादेयताच सकलवेदवेदांतस्मृतीतिहासपुराणाचार्यलोकपालप्रजापतीश्वर सर्वरहस्य सर्वस्वतया प्रत्यपादि । 'यश्छन्दसां ' अहंवृक्षस्ये' ति द्वयमेवाशिष्यवचनम् । ' शन्नोमित्र' इत्याद्याचार्य वचनम् । ' यश्छन्दसा ' मितिमननम् । ' ब्रह्मवि ' दित्यनुवा

णकानि सांहितुक्त. विश्वदेशकालवस्तु रूपसफलं त्रिविधानंत्यमेव ब्रह्मणोऽवर्तक लक्षणं दर्शितम् । अनन्तरंसंधपदे परस्परस्य ... लया परस्परवैशद्यकरे । अथाधिको कार्यारंभकाणा माकाशादीनां सर्गक्रमश्च सांहितीष्वनुक्त एवोक्तः । पुनस्तदेव इत्यत्र भृगुर्वै वारुणि स्सांहितु पनिषत्सु भगवतः प्रधानभूतेषु रूपेषु संहितानां पर्यवसान दर्शनेन तस्मिन् ब्रह्मणि प्रमाणं लक्षणं चोक्तम् । प्रमाणतो लक्षण तश्च श्रुतस्य मननं च कृतम् । यश्छंदसामिति छन्दस्त्विद्धेनानुवाकेन कर्णाभ्यां भूरिविश्रवमिति कण्ठोक्त्याच । अथतत्रैवमेधान्नादि विद्यानु गुण फलसाधनानि चोक्तानि । अनन्तरं 'वद्ब्रह्म ; सआत्मा, अगा न्यन्यादेवताः , तायोवेद,स वेदब्रह्मे'ति परमपुरुषांग भूतदेवतान्तरो पासनानि अंगिभूत पुरुषज्ञानसाधन मात्राणीतिस्थापितम् । अथसबी जयोगांगको निर्बीजयोगाभ्यधायि । 'पुरुषोमनोमयः अमृतोहिरण्मय ' इतिसबीजयोगविधिः । सत्यात्म प्राणारामं मनआनन्दं, शान्तिसमृद्धम मृतं इति उपास्वेति निर्बीजयोगविधिः । योगफलमूर्धन्यनाडिमध्यात क्रमेण मर्चिरादि प्राप्तिपूर्वक विभूतिविशिष्ट ब्रह्मानुभवश्चानुसंबन्धेयत योक्तः । सबीजोपासनेनैव, पाङ्क्तेनैव पाङ्क्तं स्पृणोती ' ति जगदाका रोपासनेनैव जगदाकारभगवत्प्राप्ति रित्यपिनियमितम् । सर्वोपासनेषु उपास्यत्रैविध्यं पंचविंशतितत्वेभ्योऽन्यत्वमुक्तं ।

तथाहि अन्नमयशब्देन पंचभूतानि गन्धादिपंच तन्मात्रयुक्तानि गृहीतानि । प्राणमयशब्देन सप्तदशीर्षण्याः प्राणास्तत्रश्रेष्ठाउक्ताः । प्राणस्यभूतवैलक्षण्यं सूत्रेस्थापितं " नवायुक्रिये पृथगुपदेशा " दिति । मनोमयशब्देन बुद्ध्यहंकार चित्तानि च संगृहीतानि । विज्ञानमय शब्देन कर्ताभोक्ता च पंचविंशकः । विज्ञानमयादन्योन्तरइति षड् विंशकः । 'साकाष्ठासा परागतिः ' इति कठोपनिषच्छिद्धम् । अथ ' यश्छन्दसामृषभोविश्वरूपः ' ' आकाशशरीरं ब्रह्म, सत्यात्मप्राणा

रामं, ' तत्र ब्रह्मः सआत्मा अंगान्यन्यादेवता ' इत्युक्तात्मशरीर भावं विवरणरूपतया सर्वतत्वानिवृत्तिश्चारीरात्मित्वं सर्वान्तरत्व मात्म काष्ठात्वं अतएव तद्ज्ञानेन स्वात्मत्वा त्सत्यत्वं तद्ज्ञानरहितस्य निरा त्मत्वादसत्यत्वं तत्सत्यत्वादिस्थापनाय साधितम् । ' आप्नोति स्वाराज्य ' मित्याद्युक्त वैशद्याय ' कश्चनगच्छति ' ' कश्चित्समश्नुता इत्युक्तम् ।

अथ शान्तिसमृद्धममृत मित्युक्तस्यांशस्य वैशद्याय सोकामयते त्यारभ्य सर्वजन्तुभि स्सर्वप्रकारसंश्लेषे सकामत्वं, यथाकर्मगुण दोषतया तत्तद्भावपर्यन्त स्संश्लेषः तेन विना सत्यत्वानर्हस्य ' तदा त्मानं स्वयमकुरुते ' ति स्वात्मदानेन स्वरूपास्थिति प्रवृत्तिप्रदानं च प्रतिपादितम् । यथाह ' य आत्मदा बलदा ' इति । आत्मबलप्रदा नेन विश्वप्रकारोपजीव्यत्वा त्प्राणिभि रनुष्ठित सुकृतमिति च स्थापितम् ।
एषह्येवानन्दयाती ' त्यज्ञानतयाप्यानन्दं किं पुनस्सर्वरूप इति चोक्तम् । ' कोह्येवान्या ' दिति सर्वस्याविशेषेण प्राणनमानन्दनंच किं पुनरनन्यभावस्य स्वभावादभयागतस्य स्वप्रतिष्ठितस्नेहभक्ति- कस्य । अत स्स्वात्मपर्यन्तसर्वप्रदत्वे कस्संशयइति औदार्यसौशील्य वात्सल्यादि काष्ठाप्रतिपादिता । अथ'तायोवेदसवेद ब्रह्मे' त्येत त्यारभ्य अंगवदन्यांगतया देवतान्तरोपासकानां उपास्यशतमखादीनां चाविशे षेण भगवत्प्रतिष्ठितमनस्कततया सभयत्वा दुत्तरपूर्वाश्रयो रश्लेषविना शाभावेन देवयानेन परमाकाश ब्रह्मोपसंक्रमणाभावाच्च । तदा विशे षेण उभयमेवेति विस्तृत मुक्तम् । अनन्तरं ' मनआनन्द ' मित्यु क्तस्यानन्दस्य युवत्वादिरूपगुणैः ज्ञानबलाद्यात्मगुणैश्च [illegible] निरव धिकत्वं ब्रह्माद्यानन्दानां ज्ञानबल[illegible] तत्सायुज्यकामनया तदु पासकानांच तथा विधत्वं प्रतिपादितम् । अथा ' मृतोहिरण्मय ' इत्यस्य वैशद्याय ' यश्चासावादित्ये स एक ' इति रूप मुद्दिष्टम् । व्यपोह्य शीर्षकपाले इत्यादिस्पष्टछाया स्माल्लोकात् ब्रह्माण्डरूपा [illegible]नवरात्रिनोनंक

# अथ भृगुवल्ली ।

## भृगुर्वै वारुणिः, वरुणं पितरमुपससार,

सुरासुरादिलोकगर्भा दहरलोकमानन्दमयपरमव्योमपरमपदादिशब्दवाच्यं सूरिदृश्यं तमस उपरिष्टात्, "प्रेत्य" आनन्दमयादि सर्वप्राप्तिः सर्वाविद्यानिवृत्तिश्चेत्युक्तम् । 'एतंवावनतपती' ति परब्रह्मविदुषोनतापः तद्व्यतिरिक्तदेवतोपासकानां सन्तापइत्युक्तम् । एवंविध भगवदौदार्यचिन्तनं विहितं, 'स यएवं विद्वानिति' इति ।

अथ भृगुवल्ल्यामपि वैश्वरूप्यपर्यायाननयोपपादनाय निखिलजगदेककारणत्वं एवं तपो निष्कृष्टलक्षण काष्ठेत्युच्यते । परप्राप्तिसाधनतयोक्तं वेदनमपि न वाक्यजन्यज्ञानमात्रं, अपितु भूयोभूयोनुष्ठितेन महतातपसैव साध्य साक्षात्काररूपमित्युक्त्वा, 'अन्नं नानिन्द्या' दिति व्रतानि साहितो ष्वनुक्तानि चोच्यन्ते ।

अथार्चिरादिना लोका ल्लोकान्तरं गच्छतएवानन्दसम्भवः । तत्र च कामरूपी सामगानादि तत्परश्चास्त इत्यानन्दवल्ल्यां प्रस्तुतमेव सर्वं साक्षिवाक्येन गुरुशिष्योपदेशरूपेण द्रढयति । 'आचार्योन्तेवासिनमनुशास्ति' 'आचार्याद्ध्येव विद्याविदितासाधिष्ठं प्राप' दिति । अन्यथा हि विद्याप्राप्ता नाशिनी स्वयं कन्यापहार इव । 'यश्चाधर्मेण विब्रूया यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छती' ति ।

( भृगुर्वैवारुणिः ) 'महर्षीणांभृगुरह' मिति प्रसिद्धोवारुणिः । ( वरुणंपितर मुपससार ) लौकिकादन्यच्छास्त्रीय मुपसदनान्तरमेतत् । 'गुरुमेवाभिगच्छेत्समित्पाणि' रित्यधीतवेदस्यैव वचनात् । 'तेह समित्पाणय' इति,[तै० माध्यन्दिनशाखादयः] 'समिधंचोम्याहर उपस्थातेन्च'

अधीहि भगवो ब्रह्मेति, तस्मा एतत्प्रोवाच, अन्नं प्राणं चक्षुश्श्रोत्रं मनो वाचमिति, तँ होवाच, यतो वा इमानि

इति, ' उपनीय ' इत्याद्यैकार्थ्याच्च ' शिष्यकर्म सर्वत्रोपसरणाख्य मुपसदनमेव। अनुपेतस्येत्यादि प्रयोगात पूर्वमुपनीता अपि ब्रह्मविद्यां गतया पुनरुपनेतव्याः । अधीहि भगवो ब्रह्मेति ) अध्यापयस्व भगवन् ब्रह्मप्रतिपादनेन ब्रह्मशब्दवाच्यं ब्रह्मभाग मित्युपससार समित्पाणिः। तमुपनीय ( तस्मा एतत् प्रोवाच ) एतत् वक्ष्यमाणं प्रोवाच वचः, स्वाधीतवचन मित्युक्तम् ! ( अन्नं प्राणं चक्षु श्श्रोत्रं मनो वाच मिति ) " अन्नं " समष्टिव्यष्टिरूपम् ' " प्राण चक्षु श्श्रोत्रं " सर्वेन्द्रिय समष्टिव्यष्टियुक्त तथा घ्राणं, ' मनः ' अन्तःकरण चतुष्टयरूपं मनो मयरूपम् । भूतानामन्नस्य ज्येष्ठत्वज्ञापनाय प्राणेषु पञ्चवृत्ते श्रेष्ठयज्ञापनाय च अन्तःकरणेषु मनः प्राधान्यज्ञापनाय च एवं निर्देशः । एवं चतुर्विंशति तत्त्व संग्रहणम् । अथ ' वाच " मिति विज्ञानमयानन्दमयानुकर्ता ' अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी ' ति जीवरूपविशिष्टस्य परस्य नामभाक्त्व श्रुतप्रसिद्धः । इत्य ' मधीहि भगवो ब्रह्म ' ति सम्प्रश्नस्योत्तरतया 'अन्नं प्राण चक्षुश्श्रोत्रं मनो वाच' मिति लक्ष्यं निर्दिष्टम् । अत एवा ' न्नाद्ध्येव प्रजाः प्रजायन्त ' इत्यादि वचनं च ।

सर्वशरीरत्वं हि पूर्वानुवाकोक्तं, अतोऽन्नमयादिरपि ब्रह्मांश एव । एव मन्नमयादि पंचकवचनैर्हि पूर्वापराविरोधस्स्यात् । प्रागुक्त साक्षित्वेन ह्ययमनुवाकः प्रस्तूयते । उत्तरत्र ' अन्नं ब्रह्मेति व्यजनात, प्राणो ब्रह्मेति व्यजना ' दित्यारभ्य पंचाना मुपासनमुच्यते । ' अन्नमय मात्मानमुपसंक्रम्ये ' त्यादौ प्राप्तिक्रमश्च तथैवोच्यते ।

अथाव्याप्त्यतिव्याप्तिरहितं अनंतगुणविभवोपपादकं सर्ववेदांतसारतयाधीतं सकलेतरसमयसर्वत व्यापकं लक्षणमप्युच्यतामित्यत्राह ( तँ होवाच ")"ह" इत्याश्चर्ये । अहो शिष्य प्रश्नाभिप्राय वैलक्षण्यानुगुणोक्तिचातुरीति । लक्षणमाह ( यतो वा इमानीत्यादि ) " यतो " " येन "

भूतानिजायन्ते, येनजातानिजीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति,

"यदि"ति प्रसिद्धवन्निर्देशो जगत्कारणवाचि पुरुषसूक्त सद्विद्यादि सकलकारणवादि वाक्यसिद्ध मनूद्य तस्य ब्रह्मत्वं विधीयते (तद्ब्रह्मेति) तत्र च 'तस्माद्विराडजायत' 'पुरुषएवेदँसर्वं' 'सर्वाणिरूपाणि विचित्यधीरः नामानिकृत्वा' 'सोकामयतबहुस्यां' 'तदात्मानँ स्वयमकुरुत' 'अनुप्रविश्यनामरूपेव्याकरवाणी' ति निमित्तोपादान सकलकारणभावेनैव प्रसिद्धः । अत्रापि तथैवानूद्यते । 'यतः" निमित्तोपादान रूपात्सद्ब्रह्म परमपुरुषपरमात्मादि शब्दवाच्यात् । "इमानि" प्रत्यक्षानुमान शास्त्रसिद्धानि पुरुषसूक्त पूर्वानुवाकाद्युक्तानि ब्रह्मेन्द्रादीनि ! "भूतानिजायन्ते" भूतानी त्यचिद्विशिष्टा ब्रह्मादय स्सर्वएवोच्यन्ते । 'भ्रामयन् सर्व भूतानि' 'लोकनाथं महद्भूतं' 'एकोविष्णुर्महद्भूतं पृथक्भूतान्यनेकशः' 'भूतानां योऽव्ययः पिता' 'ईश्वरस्सर्वभूताना' मिति ! 'जीवन्ती' ति चेतनेष्वेवोपपद्यते । (येनजातानिजीवन्ति) "येन" आत्मतयावस्थितेन । "जातानि" स्वरूपसिद्धौ तदपेक्षैव पुनरुच्छ्वास निश्वासादि सकलप्रवृत्तिनिवृत्योरपि वर्तमानानि । (यत्प्रयन्त्यभि संविशन्ति) चतुर्विधेषु प्रळयेषु "प्रयन्ति" प्रेतभावे प्रवर्तमानानिलीयमानानि यदभितस्संविशन्ति । "तद्ब्रह्म" एवंतावत् कर्मानुगुण्येन ब्रह्मादिस्वरूपस्थिति प्रवृत्तिभेदानुगुणस्वाभाविक ज्ञानबलैश्वर्याद्यनन्तगुण मक्षरपरमव्योमनिळयं सदासूरिदृश्यं निखिलविलयकालेपि स्थितं यत् तत् ब्रह्म । एवंविधं तदेवसर्वप्रकारमंगळं पूर्णं पूरयितृच । अत "स्तद्विजिज्ञासस्व" उपासनंकुरु ।

तत्तदायत्तस्वरूपजीवन विनाशानि समानि ब्रह्मादीनिभूतानि । जन्मविनाशादिवचनात् सत्यत्वमपि भूतानामुक्तम् । नहिमिथ्याभूतस्य

सतप्यतप्यत, सतपस्तप्त्वा ॥

इति भृगवल्ल्यां प्रथमोनुवाकः ।

---

अन्नंब्रह्मेतिव्यजानात्, अन्नाद्ध्येवखल्वि मानिभूतानिजायन्ते, अन्नेनजातानिजीवन्ति, अन्नं प्रयन्त्यभिसंविशन्तीति,

अकृतपंस्य तत्रजन्मविनाशौ । 'ततोविसदजायत' इतिचोक्तम् । "इति करणं" परिपूर्णलक्षणोपदेशसमाप्तौ ।

एवं लक्ष्ये लक्षणेच उपदिष्टे शिष्यः "सतपोतप्यत" तत्साक्षात्कारार्थम् । "सतपस्तप्त्वा ।" ।

इति श्री कृष्णतातार्यमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने भृगुवल्ल्यां प्रथमोनुवाकः ॥ १ ॥

---

' जितं तपः सत्यंतपो दानं तपोयज्ञस्तपः ' इत्युक्तं तपस्सांगमनुष्ठाय तद्बलेन " अन्नं " अन्नं प्राणंचक्षुश्श्रोत्रमित्यत्र प्रथमोपदिष्टम् । " ब्रह्मेतिव्यजानात् " स्वाप्रत्ययेन ज्ञानांगत्वंतपसः । तत्र कथंब्रह्मदृष्ट्युपपत्तिरित्यतआह ( अन्नाद्ध्येव खल्विमानिभूतानि जायन्ते ) पंचीकृतादितर सर्वभूतसंसृष्टं ब्रह्मादिकारणं पृथिवीतत्वमन्न मित्युच्यते । " हीति " हेतौ । अवधारणेन परमकारणस्य ब्रह्मादि कारणत्वं द्वारेणविनास्तीत्युच्यते स्व ...न्यथाभावा संभवादिति । खल्वि तिसर्वप्रकारेणैक कण्ठ्यम् । ( अन्नेनजातानिजी...न्ति ) भुक्तंभवेभुवि भार्गेहि ब्रह्मादीनां जीवनमपि । ( अन्नंप्रयन्त्यभि संविशन्तीति ) भूतत्वात् ब्रह्मादिस्थानं विमानादिकमपि पृथिवीद्रव्यमेव । अण्डान्तर्गतं

तँद्विज्ञाय,पुनरेववरुणंपितरमुपससार,अधीहिभगवो ब्रूह्मेतिं, तँहोवाच, तपसाब्रूह्मविजिज्ञासस्व, तपो ब्रूह्मेति, सतपोतप्यत, सतपस्तप्त्वा ॥

इति भृगुवल्ल्यां द्वितीयोनुवाकः ।

---

सर्वं । अण्डमप्सुलीयते आपस्तेजसीत्यादि क्रमेणविलयः । " इति " करणमुपादानसमाप्तौ । यतएव, उक्तलक्षणैकदेशादर्शना दन्नं ब्रह्मेति व्यजनादितिसंबंधः ।

" तद्विज्ञाय " तद्व्रत याथात्म्य साक्षात्कारपर्यन्तं ध्यात्वा तस्मात् सर्वश्रेष्ठप्राणमयादि सृष्टत्वदर्शनात् स्वकार्यादर्शनाच्च असन्तुष्टः ( पुनरेववरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति ) त्वयोक्तमन्नं नानन्तं, नच सर्वतत्वकारणं, नचा नवधिकातिशयानन्द मिति । ( तं होवा च तपसा ब्रह्मविजिज्ञासस्व ) इत्यादि पूर्ववत् । उपदेष्टव्यं सर्वं निरपेक्ष मुपदिष्टम् । अतोवाक्यजन्यं ज्ञानमवसितम् ।- साक्षात्कारस्तु नवाक्येन शक्यते । किन्तु तपसैव । तृतीया श्रुत्या तपसोध्यानांगत्वम् । " तपो ब्रह्मेति " ब्रह्मसाक्षात्कारसाधनं तपएव न वाक्य मित्यर्थः । अत स्तपःप्राबल्याभावात परमकारणतत्वं च त्वया न साक्षात्क्रियते । केवलं तत्कार्यं तद्रूपभूतमन्नन्दृष्टम् । अतोमहतातपसा ब्रह्मविजिज्ञासस्व " ततस्तु तं पश्यते निष्कलं ध्यायमानः " ... 

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने भृगुवल्ल्यां द्वितीयोनुवाकः ॥२॥

---

प्राणोब्रह्मेतिव्यजानात् प्राणाद्ध्येवख
ल्विमानिभूतानिजायंते, प्राणेनजातानिजीवंति,
प्राणंप्रयंत्याभिसंविशंतीतिं, तद्विज्ञाय, पुनरेववरुणं
पितरमुपंससार, अधीहिभगवोब्रह्मेतिं, तँहोवाच,
तपसाब्रह्मविजिज्ञासस्व, तपोब्रह्मेति, सतपोतप्यत,
सतपस्तप्त्वा ॥

इति भृगुवल्ल्यां तृतीयोनुवाकः ।

---

( प्राणोब्रह्मेति व्यजनात ) चक्षुश्श्रोत्रादि सर्वप्राणमयश्रेष्ठप्राणो ब्रह्मेत्युपास्ते । तदुक्तक्रमेण ( प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते ) प्राणेन विना जीवसत्ताभावात ( प्राणेन जातानि जीवन्ति प्राणंप्रयन्त्यभि संविशन्तीति ) " वाङ्मनसि सम्पद्यते मनः प्राण " इति उत्क्रमण क्रमः ।

( तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति तंहोवाच तपसा ब्रह्मविजिज्ञासस्व तपोब्रह्मेति ) महातपसाशान्त्यति रेकेण पुनःपुन रुपसत्तिः । तद्व्यतिरेकोपायाभावेन च पुनः पुनस्त पसएव चोपदेशः । तत्वभेदेनोपायभेदस्सम्भवतीति च पुनः पुन रुपसत्ति सम्भवः । प्राणस्य सर्व देवादि स्वरूपस्थिति प्रवृत्यादिहेतु त्वं [illegible] ' प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्चये ' इत्यत्र । सुबालोपनिषदि च ' आकाशमिन्द्रिये ' ष्वित्यादिना भूताना मिन्द्रिये ष्वेकीभाव विभागावुच्येते । अत उपपन्नं ' प्राणाद्ध्येव ' इत्यादिकं मन इत्यन्तम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
भृगुवल्ल्यां तृतीयोनुवाकः ॥ ३ ॥

---

मनोब्रह्मेतिव्यजानात् , मनसोह्येवखल्वि मानिभूतानिजायंते, मनसाजातानिजीवंति, मनः प्रयंत्यभिसंविशंतीति, तद्विज्ञाय, पुनरेववरुणंपि तरमुपससार, अधीहिभगवोब्रह्मेति, तँहोवाच, तपसाब्रह्मविजिज्ञासस्व, तपोब्रह्मेति, सतपोतप्यत, सतपस्तप्त्वा ॥

इतिभृगुवल्ल्यां चतुर्थोनुवाकः ।

---

विज्ञानंब्रह्मेतिव्यजानात् , विज्ञानाद्ध्येवखल्वि मानिभूतानिजायंते, विज्ञानेनजातानिजीवन्ति,

करणलक्षण शब्दभाजा मुपलक्षणत्वात् भूतेन्द्रियादीनां वा इंकारजन्यत्वात् " मनसोह्येव खल्विमानि भूतानिजायन्त " इत्यादिक मुपपन्नम् । मन आयत्तत्वाच्च सर्वकोद्भवप्रवृत्ति निवृत्तीनाम् । मनोविगमे सर्वस्य विनाशाच्च । ' मनष्षष्ठानिकर्षति ' ति ' खंमनोबुद्धिरेवच । अहंकार इतीयं मे भिन्नाप्रकृतिरष्टधे ' तिच मनस स्सर्वप्रकृतित्व मुक्तम् । एवं ( मनसाज्जातानिजीवन्ति मनः प्रयन्त्यभि संविशन्तीति तद्विज्ञाये ) त्यादिगतम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने भृगुवल्ल्यां चतुर्थोनुवाकः ॥ ४ ॥

---

( विज्ञानं ब्रह्मेति व्यजनात् विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते ) ' अव्यक्त मक्षरे लीयते ' ' अक्षरादव्यक्तं ' ' प्रकृत्यां पुरुषे

विज्ञानंप्रयंत्यभिसंविशंतीति, तद्विज्ञाय, पुनरेववरुणम्पितरमुपससार, अधीहिभगवोब्रह्मेति, तँहोवाच, तपसाब्रह्मविजिज्ञासस्व, तपोब्रह्मेति, सतपोतप्यत, सतपस्तप्त्वा ॥

इतिभृगुवल्ल्यां पंचमोनुवाकः ।

---

आनन्दो ब्रह्मेतिव्यजानात् ,आनन्दाद्ध्येव

तथा ' ' इतस्त्वन्यां प्रकृतिं विद्धिमेपरां । जीवभूतां महाबाहो ययेदं धार्यतेजगत् ' ' एतद्योनीनि भूतानि सर्वाणीत्युपधारये ' ति । पुरुषत्तमस्य स्वर्वयोनित्वं श्रुतिस्मृतिसिद्धं । ( विज्ञानाद्ध्येवेत्यादिपूर्ववद ) आनन्दमय इति पूर्वापराभ्यां द्रष्टव्यम् । त [illegible] मानुपेमय [illegible] इति च [illegible] कारोक्तम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

[illegible] गुवल्ल्यां पंचमोऽनुवाकः ॥ ५ ॥

---

( आनन्दाद्ध्येव [illegible] ल्विमानि भूतानिजायंते ) इत्यादिना लक्षणसंगतिं आनन्दमये दर्शयति । ' तमः परेदेव एकीभवती ' ति सर्वस्य तस्मिन् लयउक्तः । ' आत्मावा इदमेकएवाग्र आसीत् ' ' एको वैनारायणआसीत् ' ' उभावेतौ लीयेते परमात्मनी' ति । एतौ प्रधानपुरुषौ । ' अहं कृत्स्नस्य जगतः प्रभवः पुरुष

खल्विमानिभूतानिजायंते, आनंदेनजातानिजीवं
ति, आनंदंप्रयंत्यभिसंविशंतीति, सैषाभार्गवीवा
णीविद्या, परमेव्योमन्प्रतिष्ठिता, यएवंवेदप्रति

ष्ठति, इति । ( आनन्देनजातानिजीवन्ति, आनन्दंप्रयंत्यभिसंविशन्तीति ) अतएव मानंदो ब्रह्मेतिव्यजानादितिसंबन्धः ।

( सैषाभार्गवी वारुणीविद्यापरमेव्योमन् प्रतिष्ठितेति ) सैषानन्दमय विद्योपबृंहणत्वेन प्रस्तुता भृगुणाधिकृताख्यापिताच वरुणोक्ता । " परमेव्योमन् प्रतिष्ठिता " आनन्दमयेप्रतिष्ठितेति वक्तव्ये परमेव्योमन्निति वचनं सर्वतरव निलयेपि परमाकाशरूपस्य परमकारणस्य रूपाभावद् र्शनार्थम् । तथाहि ' त्रिपादस्यामृतंदिवि, त्रिपादोर्ध्व उदैत्पुरुषः ' ' एतत्सोमर्वात' आकाशशरीरंब्रह्म ' ' ब्रह्माग्रेज्येष्ठं दिवमाततान ' 'अक्षरेपरमेव्योमन् ' ' योवेद निहितंगुहायां परमेव्योमन् ' ' आदित्यवर्णं तमसःपरस्तात् ' ' तमसोपरिष्टात् ' ह्रीश्चतेलक्ष्मीश्च पत्न्यौ ' 'नाकस्य पृष्ठमारुह्य ' ' यत्र पूर्वे साध्यास्सन्तिदेवाः ' ' यद्यपयोविशन्ति ' इति । एवं परमपद निलये आनन्दमये विद्या पर्यवसिता : तमेवं विद्वान् अमृत इह भवति नान्यः पन्था इति चोक्तम् । ' तमसः परमोधाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यश्शाश्वतोध्रुव ' इति सकलवेदान्त वाक्यैः प्राचे तथादिभिः राक्षसैरभि रप्यभिमतोयमर्थः केनापह्नोतुं शक्यते । ब्रह्मशरीरभूतानां भूतेन्द्रियादि तत्वानां च यद्यपि कारणत्वमुक्तम् , तथापि तानि न स्वपर्यवसितानि अतस्तेषां कारणत्वं च परमात्मपर्यवसितमिति पूर्वापराविरोधेन विशिष्टस्यैव कारणत्वमिति दर्शयितुं प्रतिष्ठितेत्युक्तम् । तथां SETERHIWपणि, पर्यवसिता–समाप्ता, वित्यर्थः । ततःपरमकारणत्वात् 'महर्षीणांभृगुरह'मिति भृगोःख्यात्यां समुत्पन्नेतिचोक्तस्य भृगोःपरमभागवतस्य सुहृत्परमपदेच प्रतिष्ठिता । सूरिभि स्सुरक्षितादुर्लभेयं विद्यानिर्वाणेन स्थिता । "प्रतिष्ठिता " अन्यत्र केवलंसञ्चरति । प्रतिष्ठितत्वं तत्रैव ।

तिष्ठति, अन्नवानन्नादो भवति, महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन, महान्कीर्त्या ॥

इतिभृगुवल्ल्यां षष्ठोऽनुवाकः ।

---

अन्नंनिंद्यात, तद्व्रतं, प्राणोवाअन्नं, शरीर

( यएवं वेदप्रतितिष्ठति ) एवं विद्याप्रतिष्ठाज्ञानमात्रात प्रतिष्ठा मिष्टांळभते । अवधातस्वेदव दनुषंगेण ( अन्नवानन्नादोभवति ) " अन्नवान् " भोग्यवान् । परपमर्देद्धि भोग्यसमृद्धिः । " अन्नादः " भोग्यसमृद्धश्चस्यात । तत्रसुरिवद " महान्भवति प्रजयापशुभिः ब्रह्म वर्चसेन " प्रजयामहान् भवति । सर्वकारणज्ञानात । एवं दृष्टफळ ळाभकथनेनापि ब्रह्मण स्सर्वातिशायित्वं प्रतिपादितम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने भृगुवल्ल्यां षष्ठोऽनुवाकः ॥ ६ ॥

---

( अन्नंनिंद्यात् ) अध्यात्मनिष्ठस्यैव प्रभूतान्येतान्युच्यन्ते फळांतरे विनियोगाभावात्प्रकरणाच्च विनियोगाच्च । एतदन्न मशोभनमित्यादि नवदेत नचचिंतयेत । " तद्व्रतं " विदुषोविद्यानुपाळनीयो नियमः । तत्रहेतुमाह (प्राणोवाअन्नं ) "वै" इतिहेतौ । अन्नंहिसर्वेषां प्राणरूपेण परिणमते । 'अन्नेनप्राणा' इत्यादिश्रुतेः । अन्नायत्तस्वरूपस्थिति प्रवृत्तिकःप्राण इत्यर्थः " शरीरमन्नाद " मित्युत्तरवाक्यात्सर्वेंद्रियसहित श्रेष्ठप्राणोन्नं शरीरस्य, शरीरेण ग्रस्तत्वात धारकत्वाच्च । एवं विधः प्राणः कस्यान्न

मन्नादं, प्राणेशरीरंप्रतिष्ठितं, शरीरेप्राणःप्रतिष्ठितः, तदेतदन्नमन्नेप्रतिष्ठितं, सयएतदन्नमन्नेप्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवानन्नादोभवति, महान्भवति प्रजयापशुभिर्ब्रह्मवर्चसेन, महान्कीर्त्या ॥

इति भृगुवल्ल्यां सप्तमोऽनुवाकः ।



मित्यत्र स्वयमेवाह (शरीरमन्नादं) पंचीकृततत्वात्पांच भौतिकान्नमयं शरीरं प्राणादनम् । अतः, (प्राणे शरीरं प्रतिष्ठितं) प्राणनिरोधे विनाशात् । (शरीरे प्राणः प्रतिष्ठितः) शरीरायत्तधारणाश्च प्राणाः । इन्द्रियाणि च नाभौ हृदये सर्वांगेषु च स्थितानि । अतः शरीरनिरोधेपि हि प्राणानश्यन्ति । एवं शरीरस्याप्यन्नत्वं सुकरम्भवति । शरीरगत वस्तूनामेव प्राणेन्द्रियधारकत्वात् । "अन्न मयं हि सोम्य मन" इति श्रुतेः मनसोप्यन्नमयत्वम् । अथ जीवेनात्मनानुप्रविष्टस्य परमात्मनोपि शरीरेस्थितिरस्त्यास्ता, अतोऽध्यात्मं सर्वमन्नायत्तत्वात् अन्न मन्ने प्रतिष्ठितं च । अतोऽन्नं निन्दको ध्यात्मनिन्दकस्स्यात् । कथं ? अध्यात्मोपासकोह्यात्मानं न निन्देत । 'यस्यात्मा शरीरं' 'कोह्येवान्यात् कः प्राण्यात्' इति पूर्वेण सम्बन्धः । आत्मनिन्दात्यागौ हि निषिध्येते । उपासनानुगुणफलत्वाच्चात्रोपासनमप्याह (स य एतदन्नमन्ने प्रतिष्ठितं वेदेत्यादि) (अन्नवानित्यादि) गतार्थम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

भृगुवल्ल्यां सप्तमोनुवाकः ॥७॥



अन्नंनपरिचक्षीत, तद्व्रतं, आपोवाअन्नं, ज्योतिरन्नादं, अप्सुज्योतिःप्रतिष्ठितं, ज्योतिष्यापः प्रतिष्ठिताः, तदेतदन्नमन्नेप्रतिष्ठितं, सयएतदन्नमन्नेप्रतिष्ठितंवेदप्रतितिष्ठति, अन्नवानन्नादोभवति, महान्भवति प्रजयापशुभिर्ब्रह्मवर्चसेन, महान्कीर्त्या ॥

इति भृगुवल्ल्यां अष्टमोनुवाकः ॥

---

विदुषो नियमान्तरं माह ( अन्नं नपरिचक्षीत ) येन केनवात्मने दीयमानं निन्दापूर्वकं न निषेधेत , न परिहरेत् । ( तद्व्रतं ) 'भोज्यं मेने प्रजापतिः' 'अपि दुष्कृत कारिण' इति अविरोधं स्वयमेव वक्ष्यति । यत एव मन्त्रसंभवामित्यत्राह ( अपोवा अन्नं ज्योतिरन्नादं ) पुरोडाशादिकं मन्त्रपूत मन्नं हि जलरूपेण परिणमति । एवं विधा आपो ज्योतिषोन्नं , 'अग्नौ प्रास्ता हुति स्सम्य गादित्य मुपतिष्ठते । आदित्या ज्जायते वृष्टिः' 'हविषां परिणामोयं यदेतदखिलं जगत्' 'सरित्समुद्रभौमास्तु तथापः प्राणिसंभवाः। चतुष्प्रकारा भगवानादत्ते सवितामुने' 'यज्ञाद्भवतिपर्जन्यः' इति । ( अप्सु ज्योतिः प्रतिष्ठितं, ज्योतिष्यापः प्रतिष्ठिताः, तदेतदन्नमन्नेप्रतिष्ठितम् । ) अन्नादमिति खाद्यचूष्य लेह्यपेयरूपं चतुर्विधमपि गृहीतम् । सोमरसादि रपि अग्नौहूयते । लौकिकाग्नेरपि भाक्ष्याभाक्ष्यविवेके द्रवरूपस्नेहएवान्नम् । निहितस्नेहमंगारंज्वलति । वैश्वानराग्नेर्मेयोदरगतं जलमन्नंभवति । अस्मत्पीयमानं जलं वैश्वानराग्नेरन्नम् । 'स्निग्धमुष्णंच भोजनं' इति । शिशिर

अन्नंबहुकुर्वीत, तद्व्रतं, पृथिवीवाअन्नं,

आकाशोन्नादः, पृथिव्यामाकाशः प्रतिष्ठितः

किरणस्याप्यन्नमयत्वंसिद्धम् । 'असावादित्योब्रह्म' 'आहारमजरः कविः' 'अहंवैश्वानरोभूत्वा' इत्यादिना अन्तरादित्य विद्याद्युपास्यः । तत्र परंज्योतिरित्यत्रापि परमात्मपर्यवसानं द्रष्टव्यम् । एकद्दायुक्तं वक्ष्यतिच । तदेतदन्नमन्नायत्तमापोज्योतिश्च हुतान्नप्रतिष्ठितम् , पूर्वोक्तमन्नमपि प्राणाग्निहोत्र हुताशे प्रतिष्ठितम् । अतोन्नत्यागो सुयम पश्चत्यजति । तच्चोभयंनत्याज्यम् । विष्णोरायतनंह्यापः । अप्येववि धातपतीति । एवं मेघवृष्टयन्नानामपांज्योतिषां चान्नायत्तत्वं "योवेद" सोन्नमय परमात्मप्रसादात । प्रतितिष्ठतीत्यादिगतम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

भृगुवल्ल्यां अष्टमोनुवाकः ॥ ८ ॥



एवमप्स्वादित्येचस्थितं स्वात्मानमेव निषेधतियोन्नं निषेधति । एवमध्यात्ममधिज्योतिषं चान्नं प्रतिष्ठितमित्युक्तम् । अथाधिलोकं वक्तुमाह (अन्नंबहुकुर्वीत) बहुकरणं सम्माननम् । अलिप्सापूर्वकं स्वीकृतेनान्नेन तावन्मात्रेन पर्यवस्येत । बहुमन्यीत च । अहो मयादिष्टंचे तल्लब्ध मित्या धपच्चाराश्च महता यत्नेन कर्तव्याः । निदुर्षोनुपालनीयं( तद्व्रतं ) यत एव मन्नविस्तारइत्यत्राह(पृथिवीवा अन्नं आकाशोन्नादः ) 'हविषां परिणा मोयं यदेतदखिलं जगत' 'भूरग्नये पृथिव्यै स्वाहे' ति हुतेनान्नेन पृथिवी लोकात्मनो परथानं तद्देवताया आग्नेः, प्रथिवी चान्नमाकाशस्य, आकाशो हविर्भुजां लोकाशः । " पृथिव्यां " यत्र नारायणः । "आकाशःप्रति

आकाशेपृथिवीप्रतिष्ठिता, तदेतदन्नमन्नेप्रतिष्ठितं सयएतदन्नमन्नेप्रतिष्ठितं वेदप्रतितिष्ठति, अन्नवा नन्नादोभवति, महान्भवति प्रजयापशुभिर्ब्रह्मवर्चसेन, महान्कीर्त्या ॥

इति भृगुवल्ल्यां नवमोनुवाकः ।

नकञ्चनवसतौप्रत्याचक्षीत, तद्व्रतं, तस्मा

ष्ठित." (आकाशे पृथिवी प्रतिष्ठिता)वृष्ट्यभावे लोक विनाशात् ' देवान् भावयतानेन ' इत्यादेः । अतो व्याहृत्यात्मना वस्थितं स्वात्मानं बहुमनुते, योन्नं बहुमनुते । ' यःपृथिव्यां तिष्ठन् य आकाशे तिष्ठ ' न्निति स एव एक एव । किंच पृथिव्याकाशयो निरपेक्षजीवत्वात् तयो बहुमानः कर्तव्यः तद्बहुमानं नकुरुते योन्नंन बहुमनुते । एवं महात्म्यत्वात् दृष्टा स्याधि र्ज्योतिषाधि लोकानां सर्वस्य परमात्मो पास्य कस्या न्न बहुमानं कर्तव्यम् । ( सय एत दन्नमन्नेप्रतिष्ठितं वेदेत्यादि ) गतम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
भृगुवल्ल्यां नवमोनुवाकः ॥ ९ ॥

पुनश्च ज्ञानिनोव्रतमाह ( नकंचनवसतौ प्रत्याचक्षीत, तद्व्रतं ) वसतिमागतम्-अन्नापेक्षं माचण्डालं प्रत्याख्यानेन न विमुखं कुर्यात् । ' आदायसुकृतं तस्य सर्वं गच्छेदरक्षितः ' ' अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते । सतस्य दुष्कृतं दत्वा पुण्यमादाय गच्छति ' ' ब्राह्मणो

द्ययाकयाचविधया बह्वन्नंप्राप्नुयात्, आराध्य स्मा अन्नमित्याचक्षते, एतद्वैमुखतोन्नंराद्धं, मुखतो स्माअन्नंराध्यते, एतद्वैमध्यतोन्नंराद्धं, मध्यतोस्मा अन्नंराध्यते, एतद्वाअंततोन्नंराद्धं, अंततोस्माअन्नं राध्यते ॥ १ ॥

यएवंवेद, क्षेमइतिवाचि, योगक्षेमइतिप्राणा पानयोः, कर्मेतिहस्तयोः गातिरितिपादयोः, विमु

विविधे रूपे ' रित्यादि । अतो ब्रह्मणि प्रतिष्ठितस्य सर्वेष्वात्मसु स्वात्मानं परमात्मान मनु पश्यतो विदुषो वश्यकर्तव्यान्नियमानाह ( नकंचन ) अपि द्वांसमपि । " वसतौ " वसत्यर्थमागतम् । " नप्रत्याचक्षीत " न प्रत्याख्यानं कुर्यात् । भगवदात्मकं सर्वं विजानन् यदि कंचन प्रत्याच क्षीत, भगवतएव प्रत्याख्यनं कृतंस्यात् । तस्मात् " तद्व्रतं " नियमं नानुष्ठेयम् । तस्मा द्विदुषा न कश्चिदपिवासार्थी प्रत्याख्येयः । "तस्मात् ययाकयाचविधया " येनकेनापि प्रकारेण प्रतिष्ठिद्धेनापि । " बह्वन्नं " संपादयेत् । अन्नहीनगृहेवासो नयोग्यः । तथा ' किं प्रथमांरात्रिमाश्ना ' इतिश्रुतेः । "अराद्धि" सर्वत्रसंसिद्ध " अन्नं " तस्सर्वं । " अस्मै " विदुष एवेत्याचक्षते । तदुक्तं एतद्वेदनमाहात्म्यात्सर्वावस्थासु सिद्धमन्नमिति । यएवंवेद तस्यापि सर्वकालेष्वन्नं सुसिद्धंस्यादितिभावः ।

विदुषोनुसंधानविशेषै स्सुखविशेषान् दर्शयति ( क्षेमइति ) क्षेम स्सुख । एवमुपासीनस्स्वयं क्षेमवान् (योगइति) योगिवाग्धेतुत्वात्सुखानां प्राणापानयो र्योगक्षेमावनुसंधेयौ । अलभ्यलाभोयोगः । तद्धेतुःप्राणः । लब्धस्यपालनंक्षेमः । उपसंहाररूपत्वात्तद्धेतुरपानः । क्षेमइति मध्यम

क्लिरितिपायौ, इतिमानुषीस्समाज्ञाः, अथदैवीः,

तृप्तिरितिवृष्टौ, बलमितिविद्युति ॥ २ ॥

यशइतिपशुषु, ज्योतिरितिनक्षत्रेषु, प्रजा

तिरमृतमानंदइत्युपस्थे, सर्वमित्याकाशे,

पदद्वेपि समासेन उभयपदशादेकवचनम्। हस्तयोः कर्मेति बोद्धव्यम्। अप्राप्तस्य प्रापण कर्मनिमित्तं हस्तौ : गतिनिमित्त पादौ । विमोचनस्यात्र पायुः। एवं बुद्ध्यमानानां तत्र तत्र तत्कार्यं निरतिशयं भवतीति भावः। (इतिमानुषी स्समाज्ञाः) "मानुषीः" मनुष्यशरीरावयवगताः। "समाज्ञाः" ज्ञानविशेषाः। भगवदाज्ञा माया इत्यर्थः ।

(अथदैवीः) दिव्याः अमानुष्यः समाज्ञाः प्रकाश्यन्ते । (तृप्ति रिति वृष्टौ) तृप्ति हेतु वृष्टिः । (बलमिति विद्युति) बलवन्मेघसं घट्टजन्माविद्युत। (यश इति पशुषु) यशोहेतवः पशवः। क्षीरादि प्रदानेन।( ज्योतिरिति नक्षत्रेषु ) नक्षत्रशब्देन सूर्याचन्द्रमः प्रभृति तेजः पदार्था उच्यन्ते। ज्योतिः प्रकाशनहेतुः। (प्रजातिरमृतमानंद इत्युपस्थे) प्रजातिर्जन्म, अमृतममृतत्वं मोक्षः, आनन्दस्सुखं, एत त्सर्वं मुपस्थे बोद्धव्यम्। उपस्थ नियमना दमृतत्वसिद्धेः। (सर्व मित्याकाशे) आकाशे सर्वमिति बोद्धव्यम्। आकाशस्यार्वाचीन सर्वं हेतुत्वात ।

तत्प्रतिष्ठेत्युपासीत, प्रतिष्ठावान्भवति, तन्मह इत्युपासीत, महान्भवति, तन्मनइत्युपासीत, मानवान्भवति ॥ ३ ॥

तन्नमइत्युपासीत, नम्यंतेस्मैकामाः, तद्ब्रह्मेत्युपासीत, ब्रह्मवान्भवति, तद्ब्रह्मणःपरिमरइत्युपासीत, पर्येणांम्रियंतेद्विषंतस्सपत्नाः, परीयेंप्रिया भ्रातृव्याः,

आनन्दमयस्य सर्वहेतुत्वा त्तस्मिन्नपेक्षितं सर्वमनुवन्धयन्नित्याह ( तत्प्रतिष्ठेत्युपासीत ) प्रतिष्ठाहेतुत्वात् । एव मुपासीनः ( प्रतिष्ठावान् भवति ) ( तन्मह इत्युपासीत ) तदेतद्ब्रह्म, महः महत्त्वं पूजावा । (महान् भवति) परम पूज्यो भवति । ( तन्मन इत्युपासीत ) मनः मननं, बहु मानोवा । तद्धेतुरपि ब्रह्मेति बोद्धव्यम् । ( मानवान् भवति ) आनन्दाभिमानवान् भवति । ( तन्नम इत्युपासीत ) नमनं प्रह्वीभावः । तद्धेतुरपि ब्रह्मेति बोद्धव्यम् । ( नम्यन्ते स्मैकामाः ) काम्यन्तइति कामाः । सर्वकामा अस्मैस्वयमेवनमन्ते । ' नद्रुह स्नुनमा-' मिति छान्दसत्वा न्न प्रवर्तते । ( तद्ब्रह्मेत्युपासीत ) "ब्रह्म" तद्ब्रह्म बृह्मणमिति बोद्धव्यम् । ( ब्रह्मवान् भवति ) बृहत्व गुणयोगि सर्ववान् स्यात् । ( तद्ब्रह्मणः परिमर इत्युपासीत ) सर्वताम्रियन्ते सर्वेप्यस्मिन्निति " परिमरं " विरोधि विनाशकमुपासीत । एवमुपासीनं " एणं " एनम् । च्छान्दसं णत्वम् । ( द्विषन्तस्सपत्नाः ) द्वेष्टार श्शत्रवः । " एणं " " परि " लक्षीकृत्य, परितोवा । ( परीये भ्रातृव्याः ) योचान्ये " अप्रियाः", "भ्रातृव्या" श्च परितोयेवर्तन्ते तेसर्वे च म्रियन्ते । परीय इति दीर्घश्छान्दसः ।

सयश्चायंपुरुषे,यश्चसावादित्ये,सएकः ॥४ ॥

सयएवंवित , अस्माल्लोकात्प्रेत्य, एतमन्नमयमात्मानमुपसंक्रम्य, एतंप्राणमयमात्मानमुपसंक्रम्य, एतंमनोमयमात्मानमुपसंक्रम्य, एतंविज्ञानमयमात्मानमुपसक्रम्य, एतमानंदमयमात्मानमुपसंक्रम्य, इमान्लोकान्कामान्नीकामरूप्यनुसञ्चरन् , एतत्सामगायन्नास्ते,

उक्तसर्वार्थे हेतुमाह ( सयश्चायं पुरुषे यश्चासावादित्ये इत्यादि ) आदित्यइति दिव्यानां पदार्थानां । पुरुषइति मनुष्याणां चोपलक्षणम् । एकः प्रधानः, उभयत्र एकएवेति । एतत् ज्ञानवतः फलं दर्शयति ( सयएवंवित् ) एवं विद्वान् । अन्नमयं प्राणमयं मनोमयं विज्ञानमयं च क्रमेण पूर्वपूर्वं विहाय उत्तरमुत्तरंप्राप्य । ( एतमानन्दमयमात्मानमुपसंक्रम्य ) "एतं" पूर्वोक्तमहामहिमयुक्त मानन्दमयं निरवधिकातिशय मानन्द मात्मानं सर्वेषां व्यापारं धर्तारं नियन्तारं शेषिणं, " उपसंक्रम्य " समीपं प्राप्य । प्रक्षीणाविद्या कर्मवासनारुचिप्रकृति सम्बन्ध स्तत्प्रसादप्राप्त ज्ञानबलैश्वर्य वीर्यशक्त्यादि गुणाकरः " इमान् लोकान् " परावरानखिलान् लोकान् । " कामान्नी " काम्यमाण सर्वभोग्यवान् । " कामरूपी " यथेच्छाविशेष दिव्यशरीरवान् । ( एतत्सामगायन्नास्ते ) प्रकर्षेण सर्वकालं तत्सामगानेन चित्रीयमाण आस्त इति । तथा 'स एकधाभवति द्विधाभवति त्रिधाभवति' 'जक्षत् क्रीडन् रममाणस्त्रीभि र्वायानै र्वा ' ' येन येन धाता गच्छति तेन तेन सह गच्छति ' ' तद्यथा तरुणवत्सा वत्सं वत्सोवामातरं छाया वासत्व मनुगच्छेत , तथे ' त्यादि ।

हा३ वु३हा३ वु३हा३ वु ॥ ५ ॥

अहमन्नमहमन्नमहमन्नं, अहमन्नादो३ हमन्नादो २ हमन्नादः, अहँश्लोककृदहँश्लोककृदहँश्लोककृत् , अहमस्मिप्रथमजाऋता३स्य, पूर्वंदेवेभ्यो अमृतस्यनां३भा३यि,योमाददातिसइदेवमा३ वा३ः,

( हावु हावु हावु इत्यादि ) अहं संसारी संकुचितज्ञान स्वत्प्रसादेन भगवदानन्दं प्राप्तवानस्मि, "हो" अहो इति विस्मयते । विस्मयस्य निरवधिकातिशयत्वात् बहूक्तिः । 'एचोप्रगृह्यस्या दूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुता' वित्योकारेऽकारस्य प्लुतः । उकारस्य वकारो यत्नश्छान्दसः । ( अहमन्न महमन्न महमन्न मिति ) आत्मनोभगवद्भोग्यतांदृष्ट्वा तृप्तयतिशयेन माद्यति । ( अहमन्नादोहमन्नादोहमन्नाद इत्यादि ) भगवदानन्दस्या हं भोक्तास्मी त्यसम्भवदर्थ सम्भावनया आनन्दसमुद्रे निमज्जति । ( अहं श्लोकक़ृ दहं श्लोकक़ृ दहं श्लोकक़ृदिति ) अहमानन्दमयस्य पुरुषोत्तमस्य "श्लोककृत्" स्तोतासंवृत्तइति मन्यते । सर्वत्र अहो अहो अहो इत्यनुषंजनीयम् । तथा 'तद्विप्रासो विपन्यव' इति । अनन्तरं (अहमस्मि प्रथमजा ऋतस्येति ) कल्याणगुणानानन्दमयस्य पुरुषोत्तमस्य प्राप्तस्य सर्वातिशयान् दुर्लभान् प्रदर्शयति । "अहं" "ऋतस्य" आदरणीयस्य पुरुषोत्तमस्य "प्रथमजाः" दिव्यसूर्यप्रगण्यः । "अस्मि" प्रथमजाः प्रथमोजातइति 'जनसनखने' ति विट् । 'विड्वनोरनुनासिकस्यादि' त्यात्वम् । ( पूर्वंदेवेभ्यो अमृतस्य नाभिः ) नकेवलमहं सूरिवर्योभवं, अपितु देवेभ्यो ब्रह्मादिभ्यः । "पूर्वं" पूर्वोस्मि । व्यत्ययेन द्वितीया । अमृतस्य नाभिः अमृतत्वस्य नाभिः । आधार उपायोभवम् । ( योमा ददाति सइदेव मावाः ) योस्मदाचार्योमां ज्ञानेन भगवद्योग्यंकृत्वा भग

अहमन्नमन्नमदंतमा ३ द्मि, अहंविश्वंभुवनमभ्य

भवाम् , सुवर्णज्योतीः, यएवंवेद ॥ ६ ॥

इत्युपनिषत् ।

इतिभृगुवल्ल्यां दशमोनुवाकः ।

( राध्यते विद्युति मानवान् भवत्येकोहा३ वुयएवं वेदैकञ्च । )

-वते ददाति, स एव मुक्तप्रकारं " आवाः " रक्षितवान् । अथ वा-आवाः सर्वमावृणोति अन्यैरनावृतम् । अहमपि तया भूतोस्मि । सर्वत्र वामगानेन प्रीति प्रकर्षेण क्षरादक्षरान्तप्राप्तौ तद्रागस्तत्रैववर्तते । ( अहमन्नमन्नमदन्तमद्मीति ) आत्मभोग्यत्वमात्मनो भगवद्भोक्तृ त्वं च पुनःपुनरभिधाय आत्मानं स्तौति । ( अहं विश्वंभुवन मभ्यभवां ) सर्वं भूतजातमहं अभिभवेयमिति मुह्यति । 'छेटोडाटा ' वित्य डागमः । सर्वाभिभवने निदर्शनमाह ( सुवर्णज्योतीः ) सुवर्ण शब्दवाच्यं परमपदं, तत् ज्योतिरिव । इति रिवार्थे (?) ।

एत द्वेदितुः फळमाह ( य एवं वेदेति ) " इत्युपनिषत " एवं विद्वा नानन्दमयस्य परस्य ब्रह्मणः उपनिषीदति समीपं प्राप्नोतीत्यर्थः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

भृगुवल्ल्यां दशमोऽनुवाकः ॥ १० ॥

भृगुस्त्रयोदशान्नं प्राणोमनोविज्ञानं द्वादशद्वाद शानंद स्सैषा दशान्नं नानिद्यात्प्राणश्शरीरमन्नं नपं रिंचक्षीतापोज्योतिरन्नं बहुकुर्वीत पृथिव्यामाकाशए कादशैकादश नकञ्चनैकंषष्टिर्दश ॥

शन्नश्शीक्षाँ सहनौयश्छंदसां भूस्सयःपृथिव्यो मित्यृतंचाहं वेदमनूच्यशंनस्सहनाववतु ब्रह्मवि द्भृगुःपंचदश ।

शन्नोमहइति ये तत्रभीषास्मादन्नं बहुकुर्वीत द्विचत्वारिँशत् ॥ ४२ ॥

शन्नइत्युपनिषत् ।

---

इति भृगुवल्ली ।

---

तैत्तिरीयारण्यकस्य

पंचमः प्रश्नः समाप्तः ।

श्रीरस्तु ।

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणेनमः ।

# तैत्तिरीया याज्ञिक्युपनिषत् ।

## ( आरण्यकस्य षष्ठःप्रश्नः । नारायणाख्यः । )

श्री कूरनारायणमुनिवर विरचितेन

भाष्येण सहिता ।

जगदुत्पत्ति सम्पत्ति विपत्ति परिवृत्तयः ।
यदभिध्यालवोल्लासा स्तस्मै श्रीनिधयेनमः ॥
प्रणवेनात्मतत्वानां प्रसिद्धांपरशेषताम् ।
आध्यात्मिकीं ज्ञापयति शेषित्वं शेषशायिनः ॥
पूर्वाचार्योपदिष्टेन स्वरसेनपराध्वना ।
व्याख्यायतेसोपनिष त्संसारार्णवतारिणी ॥
यज्ञात्माभगवानस्य द्रष्टा तस्य ऋषिस्स्वयम् ।
सएवप्रतिपाद्योसौ देवतायज्ञसंज्ञितः ॥

तत्र संहितयोवारुण्यैश्च व्याख्याताः । याज्ञिक्य इदानीं व्याख्या यन्ते । सएषप्रश्नस्समस्तो नारायणमेव मुक्तकण्ठं सर्वकारणं सर्वोपास्यं सर्वप्रापकं बहुभि स्तात्पर्यैः प्रतिपादयति ।

तत्र प्रथमेनानुवाकेन नारायणस्य सर्वकारणस्य सर्वव्यापित्व सर्वात्मत्व सर्वशेषित्व समाधिकदरिद्रत्व सर्वभूत सुहृत्त्वादिकं प्रतिपाद्यते ।

स्नानमकृत्वा समाराधनादि ष्वनधिकारात तत्र स्नाने सर्वे मन्त्रा विनियुक्ताः । 'अम्भस्यपार' इत्यादिक स्सर्वोनुवाक स्त्रैष्टुभः । विशेषो वक्ष्यते ।

अम्भस्यपारेभुवनस्यमध्ये नाकस्यपृष्ठेमहतोम हीयान् । शुक्रेणज्योतीꣳषिसमनुप्रविष्टः प्रजाप तिश्चरतिगर्भेअंतः ॥ १ ॥

तत्र प्रथमयात्रिष्टुभा परमात्मन स्सर्वव्यापित्व मुच्यते । ( अम्भ स्यपारे ) प्रळयावस्थायाम् । ( भुवनस्य मध्ये ) चतुर्दश भुवनगर्भे । ब्रह्माण्डे तदन्तर्वर्तिषु देवतिर्यङ्मनुष्य स्थावरात्मकेषु । ( नाकस्य पृष्ठे ) न अस्मिन् अकं दुखं भवतीति दुखासम्भिन्न स्वा साधारणो देश विशेषो नाकः, तस्य, " पृष्ठे " उपरि प्रदेशे । ' विश्वतः पृष्ठेषु सर्वतः पृष्ठे ष्वनुत्तमेषूत्तमेषु लोके ' ष्विति प्रसिद्धे सकलवाङ्म नसागोचर माहिम्नि परमपदे निवेशने । ( समनु प्रविष्टः ) सम्यक् समन्तात् सर्वानुकूलत्वेन सर्वदा प्रविश्यस्थितः । ( ज्योतींषि ) अग्न्या दित्य सोमशुक्रादीन् । ( शुक्रेण ) तेजोलेशेन प्रविश्य वर्तमानः । तथा ' यस्यादित्यो भा मुपयुज्यभाति ' ' येनसूर्यस्तपति तेजसेद्धः ' ' सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत ' ' एतस्यवा अक्षरस्य प्रशा सने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' ' प्रभास्मि शशि सूर्ययोः ' । ' तेजस्तेजस्विनामह ' मित्यादि । ( महतो महीयान् ) महतामपि महत्तरः । पृथिवी तावन्महती, ततोपि महत्य आपः, ताभ्योग्निः प्रबलः । तस्माद्वायुः । ततोप्याकाशः । ततो हंकारः । ततो महान् । महतः प्रधानम् । प्रधानादपिपुरुषो ज्ञानशक्त्यादिभि र्महान् । पुरुषादप्ययं परमात्मा " महीयान् " महत्तरः । अस्यैव निरुपाधिकं परमं महत्वं, इतरेषां महत्व मन्यापेक्षम् । अस्य स्वरूपगुणविभूत्यादिभि स्सर्वै स्सर्वस्मान्महत्त्व मिति विशेषः । तथा ' सभूमिं विश्वतोवृत्वा अत्य तिष्ठ द्दशांगुलं ' ' अतोज्यायाꣳश्च पूरुषः ' इत्यादि । ( प्रजापतिश्च रति गर्भे अन्तः ) " प्रजापतिः " सर्वासां प्रजानां पतिः स्वामी, शेषीति यावत् । औणादिको डति प्रत्ययः । ' महीयान् प्रजापति

# यस्मिन्निदँसंचविचैति सर्वंयस्मिन्देवाअधिविश्वे

नारायण ' इति श्रुत्यन्तरेषु प्रसिद्धः । प्रजापति स्संवत्सरो महान्' ' कः कोह्वैनाम प्रजापतिः ' ' पतिं विश्वस्य ' ' पतिं पतीनां ' ' प्रधान क्षेत्रज्ञपति र्गुणेशः ' ' क्षरं प्रधानममृताक्षरं हरः ' ' क्षरात्मानावीशते देव एकः ' ' ज्ञाज्ञौद्वावजावीश नीशौ ' ' सकारणं करणाधिपाधिपः ' इत्यादिभि र्निरुपाधिक प्रजापतित्वं नारायणस्यैव । अन्येषां प्रजापतित्वं तत्प्रसादायत्तम् । ब्रह्मणस्तावत्प्रजापतित्वं भगवदायत्तमिति ब्रह्मास्वयमेवाह श्रीमदुत्तररामायणे ' महार्णवेशयानोप्सुमांत्वं पूर्वमजीजनः' 'प्राजापत्यं त्वयाकर्मसर्वंमयि निवेशितं ' इति । मनुरपि ' तपस्तप्त्वा सृजद्यंतु सस्वयं पुरुषोविराट् । तम्मांवित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥ पतीन् प्रजानामसृजत् महर्षीनादितोदशे ' ति स्वस्य स्वसृष्टानां च प्रजापतित्वं भगवदायत्तमिति दर्शितावान् । ( गर्भे अन्तः ) सर्वेषां भूतानां गर्भे शरीरात्ममध्ये । ( चरति ) तेषां धारकत्वेन च वर्तत इत्यर्थः । तथा च श्रुतिः ' यच्च किंचि जगत्यस्मिन् दृश्यते श्रूयतेपिवा । अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणस्स्थितः ' इति । ' तत्सृष्ट्वा तदेवानुप्राविशत् ' इत्यादिश्च ।

'योलोकत्रयमाविश्य' 'नतदस्ति विनायत्स्यात् मयाभूतं चराचरं' मिति यथास्यैव परमात्मानो विभूतिद्वयं शेषं भवति, तथा दर्शयति ( यस्मिन्नित्यादि ) " यस्मिन् " कारणभूते । " इदं " " सर्वं " प्रळयकाले । " समेति " एकीभवति । ' अव्यक्तमक्षरे लीयते, तमः परेदेवएकीभवति ' इति । तथा च वैष्णवपुराणे ' प्रकृतिर्यामया ख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेतेपरमात्मनि॥ परमात्मा च सर्वेषा माधारः परमेश्वरः । विष्णुनामासवेदेषु वेदान्तेषुच गीयते ' इति । तथा ' प्रधानं च पुमांश्चैव सर्वभूतात्म भूतया । विष्णुशक्त्या महाबुद्धे वृतेसंश्रयधर्मिणौ ॥ तयोस्सैवपृथक्भाव कारणं संश्रयस्य च । क्षोभकारणभूता च सर्गकाले महामते ' इत्यादि । सृष्टिकाले इदंसर्वं " वि-एति " तस्मात् गच्छति । जगत्कारणे च वर्तते । ( यस्मिन् देवा अधिविश्वे निषेदुः ) " यस्मिन् " अधि

निषेदुः, तदेवभूतं तदुभव्यमाइदं तदक्षरे परमे व्योमन् ॥ ८ ॥

कुलेवे वर्तमाने । "विश्वे" "देवाः" नित्यज्ञान क्रियैश्वर्याः सूरिसंघा ताश्च परपर्यायाः । "निषेदुः" तद्भोगैकभोगा वर्तन्ते । एवं व्याप्ति नियमनादिभिः लीलाविभूतिं विभावयन् स्वासाधारणीं नित्यविभूतिं स्वा मित्वेन सम्मोदयन् तदक्षरेपरमेव्योमन् स्वाभिमत विविधविचित्रानन्त भोग्यभोगोपकरण भोगस्थानसमृद्धे निस्सीममहामहिमनि परमव्योम्नि तत्परं ब्रह्म सर्वकालं सन्निदधाति । एवं सर्वात्मत्वेन व्याप्यनियच्छत् "तदेव" परब्रह्म त्रिकालवर्ति । "भूतं" सर्वभूतजातं "आः" आसीत । तदात्मक मासीत ॥ ८ ॥

अस्तेश्छान्दसेछडि इडभावः । श्रुति स्मृत्योस्सर्वत्र सामानाधिकरण्य निर्देशेषु उपक्रमोपसंहारयोः कारणत्व व्यापकत्वादिकमुक्त्वा मध्ये सामा नाधिकरण्येन निर्देशः । तथाच श्रीगीतोपनिषदि 'अहंकृत्स्नस्य जगतः प्रभवःप्रलयस्तथा ॥ मत्तःपरतरंनान्यत् किंचिदस्ति धनंजय । मयिसर्व मिदंप्रोतं सूत्रेमणिगणाइव' इतिकारणत्वव्याप्ती समभिधाय 'रसोहमप्सु' इत्यादिना सामानाधिकरण्यं प्रपंच्य, 'येचैव सात्त्विकाभावा राज सास्तामसाश्चये । मत्तएवेति तान्विद्धि नत्वहं तेषु तेमयि' इति कारणत्व व्याप्तिभ्यां निगम्यते । तथा 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः । अहमादिश्च मध्यंच भूतानामन्तएवचे' ति कारणत्वव्याप्ती प्रदर्श्य 'आदि त्याना महंविष्णु' रित्यादिना सामानाधिकरण्येन विभूतीः प्रपंच्य, 'यद्य द्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्त देवावगच्छत्वं ममते जोंशसम्भवं' 'विष्टभ्याहमिदंकृत्स्न मेकांशेन स्थितो जगत्' 'नत दस्ति विनायत्स्यात् मयाभूतं चराचर' मिति तयैवोप संहृतम् । तथा 'सर्वं समाप्नोषिततोसिसर्वं' इतिच । श्रीवैष्णवपुराणे 'सर्वगत्वादन

येनावृतखचद्दिवंमहींच येनादित्यस्तपतितेज

साभ्राजसाच, यमन्तस्समुद्रे कवयोवयंति यदक्ष

रेपरमेप्रजाः ॥ २॥

न्तस्य तएवाह मवस्थितः ' ' विष्णोस्सकाशादुद्भूतं जगत्तत्रैवचस्थितम् । स्थितिसंयमकर्तासौ जगतोस्य जगच्चसः ' इति । तथा ' सच विष्णुः परं ब्रह्म यतस्सर्व मिदं जगत् । जगच्चयोयत्रचेदं यस्मिंश्च लयमे ष्यति ' ' यदम्बुवैष्णवःकाय स्ततोविप्रवसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादि संयुता ' त्यादिना सर्वस्य जगतश्शरीरत्वं भगवतस्सर्वात्मकत्वं चाभिधाया नन्तर सामानाधिकरण्येन ' ज्योतींषि विष्णु ' रित्यादि प्रपंचितम् । श्रुतिष्वपि ' सर्वं खल्विदं ब्रह्म तज्जलानिति ' ' तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवद ' ' सभूमिंविश्वतोवृत्वा, अत्यतिष्ठद्दशांगुळं, पुरुषएवेदंसर्वं, यद्भूतंयच्च भव्यं ' इति ।

तदेव प्रपंचयति ( येनावृतमिति ) " येन " परमात्मनाकारण भूतेन । " खंच " आकाशश्च । " दिवं " द्यौश्च । " महींच " मही च । " आवृतं " व्याप्तम् । विभक्तिव्यत्ययश्छान्दसः । उपलक्ष णत्वा दन्तर्वर्तिभूतजातानि चावृतानि । ( येनादित्यस्तपति तेजसा भ्राजसाच ) इद्धस्तपति अनुग्रहीतोवातपति । " तेजसा " दीप्तया । " भ्राजसाच " औष्ण्येनच । सर्वं जगत प्रकाशयति तापयति । ( यमन्तस्समुद्रे कवयोवयन्ति ) " यं " सर्वव्यापिनं पुरुषोत्तमम् । " अन्तस्समुद्रे " क्षीरोदमध्ये, आत्मनिवा । " कवयः " क्रान्तदर्शिनः परमयोगिनः श्वेतद्वीपवासिनः । " अवयन्ति " अवगच्छन्ति । सम्पश्यन्तीत्यर्थः । तथा च श्वेतद्वीपवासिनां माहात्म्यम् श्रीनाराय णीये ' नित्याञ्जलिपुटाहृष्टा नमइत्येववादिनः । अतीन्द्रिया अनाहारा

यतःप्रसूताजगतःप्रसूतीतोयेनजीवान्व्यससर्ज भूम्या, यदोषधीभिः पुरुषान्पशूँश्चविवेशभूतानि चराचराणि ॥ ४ ॥

अनिष्यन्दास्सुगन्धिनः' इत्यादीनिद्रष्टव्यानि । अथवा समुद्रवयन्त्य स्मादिन्द्रियाणीति "समुद्रः" प्रत्यगात्मा, तस्मिन् । "कवयः" योगिनः । "अव यन्ति" अनुसन्दधति । तथा 'अथयदिदमस्मिन् ब्रह्मपुरेदहरंपुण्डरीकं वेश्मदहरोस्मिन्नन्तराकाश स्तस्मिन्यदन्तस्तदन्वेष्टव्यम् तद्वावविजि ज्ञासितव्य' मित्यादि । 'अन्तस्तद्धर्मोपदेशा' दिति सूत्रकारोपि इममर्थ मुक्तवान् । अथवा समुद्रवन्त्यस्मात भोगजातानीति समुद्रः, परमपदम् । 'योवेद निहितं गुहायां परमेव्योमन्, सोश्नुतेसर्वान् कामान् सहब्रह्मणाविपश्चितेति' इति ।

अस्य परमकारुणिकस्य जगत्सर्गादिकं दर्शयति ( यतः प्रसूता जगतः प्रसूती ) "यतः" यस्मात कारणभूतात् । "प्रसूता" उत्पन्ना । भोगोपकरण भोगस्थानत्वेन विकृताभूत । "जगतः प्रसूती" जग त्प्रकृतिः त्रिगुणात्मिका प्रधानाव्याकृताद्यपरपर्याया । ( तोयेन जीवान् व्यससर्ज भूम्यां ) यश्च "तोयेन" तोयोपलक्षितैः प्रकृति परिणाम रूपैः महाभूतैः । "जीवान्" द्रुहिणद्रुमावधीन् । "व्यससर्ज" सृष्टवान् । देवतिर्यङ्मनुष्यस्थावरात्मना कल्पयामास । छान्दसोडा गमः । "भूम्यां" भूम्युपलक्षितेषु अशेषेषु लोकेष्वित्यर्थः । तथा 'मयाध्यक्षेण प्रकृतिः स्सूयते सचाराचरं' 'ममयोनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहं' 'सम्भवस्सर्वभूतानां ततो भवति भारते' ति । वैष्णवपुराणे- 'प्रधानं पुरुषंचैव प्रविश्यात्मेच्छयाहरिः । क्षोभया मासवम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥ यथा सान्निधिमात्रेण गन्धः क्षोभाय जायते । मनसोनोपकर्तृत्वात् तथासौ परमेश्वरः' इति । एवं सर्वाणि

अतःपरं नान्यदणीयसँहिपरात्परं यन्महतोमहां
तं, यदेकमव्यक्तमनन्तरूप विश्वंपुराण तमसः
परंस्तात् ॥ ५ ॥ (१)

भूतानि सृष्ट्वा तदनन्तरं, " यत " कारणभूतं परंब्रह्म । "औषधीभि." तेषां भूतानां धारिकाभिः चतुर्दशधा विभक्ताभिः सह, " पुरुषान् " देवमनुष्यादीन् । " पशूंश्च " ग्राम्यारण्यात्मना चतुर्दशधाविभक्तान् । एवं " भूतानि चराचराणि " चराचररूपाणि सर्वभूतानि । " विवेश " तेषां नामरूप निर्वहणार्थं धारणार्थं पोषणार्थं च । वैष्णवेपुराणे सृज्यानामोषधीनां पशूनां च चतुर्दशधाविभक्तत्व मुक्तं ' औषध्योयाज्ञिकाश्चैव ग्राम्यारण्याश्चतुर्दश ॥ व्रीहयस्सयवामाषा गोधूमाअणवस्तिलाः । प्रियंगुसप्तमाह्येते अष्टमास्तुकुलुत्थकाः ॥ श्यामाकास्त्वथनीवारा जर्तिलास्सगवेधुकाः । तथावेणुयवाः प्रोक्ता स्तद्वन्मर्कटकामुने ॥ ग्राम्यारण्यास्स्मृताह्येता ओषध्यस्तु चतुर्दश " इति । तथा- ' गौरजःपुरुषोमेषः अश्वाश्वतरगर्दभाः । एतान् ग्राम्यान् पशूनाहुः आरण्यांश्च निबोधमे ॥ श्वापदा द्विखुराहस्ति वानराः पक्षिपंचमाः । औदका पशवष्षष्ठाः सप्तमास्तु सरीसृपाः ' इति ।

एवंपर्यन्ताभिः ऋग्भिः अस्य पुरुषोत्तमस्य सर्वव्यापित्वं सर्व शरीरत्वं सर्वस्रष्टृत्वं सर्वाधिकत्वं सर्व निर्वाहकत्वं नित्यनिस्सीम महाविभूतित्व सूरिपरिचरणीयत्व मित्याद्यर्थजात मुक्तम् । अतः पर मस्य समाधिकसम्भावना न्निषेधयति । ( अतः परमिति ) " अतः " उक्त माहिम्नः पुरुषोत्तमात् । " परं " स्वरूप रूपगुण विभूत्यादिभिः प्रकृष्ट, " अन्यत " किंचिदपि । " न " अस्ति । " अणीयसं " एतस्मादणीयसोपि सूक्ष्मतरमपि किंचिदपि नास्ति । छान्दसस्सकारः । अस्यैव सूक्ष्मतमत्वेन सर्वव्याप्ति स्सम्भाविता नान्यस्येति दर्शितम् । एव मेतद्व्यतिरिक्तस्य परमसूक्ष्मत्वादिकं प्रति

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

ऋतꣳसत्यम्... नाभिः ॥ ६ ॥

विद्धम् । अस्यैव सर्वस्मात्परत्वं प्रतिपादयति । " परात्परं " प्रकृत्यादि सर्वतत्त्वपरा दात्मनो बद्धमुक्तनित्यरूपादपि परम् । तथा, " महतो महान्तं " महद्भ्योपि महत् । लिङ्गव्यत्यय श्छान्दसः । 'महतो महीया नित्यत्र व्याख्यातम् । किंच । " यत् एकं " इत्तेषु सर्वकार्येषु यदेकं वर्तते । असहायं स्वशक्त्यैव समर्थ मितियावत् । किंच, " अव्यक्तं " सर्वैः प्रमाणै स्सर्वैर्योगिभिरपि अपरिच्छिन्न स्वरूपस्वभावम् । किंच, " अनन्तरूपं " देशकालवस्तुभिः अपरिच्छेद्य स्वासाधारण दिव्यस्वरूपम् । तथा 'सएकधाभवति द्विधा भवति त्रिधाभवति ' ' इच्छा गृहीताभिमतोरुदेह ' इत्यादि । "विश्वं" विश्वात्मकत्वा द्विश्व, सर्वशब्द वाच्यं च । 'सर्वं समाप्नोषि ततोसि सर्वं ' इति । " पुराणं " सर्वकारणानां आदिभूतत्वेपि नवतरम् । तथा ' यः पूर्व्याय वेधसे नवीयसे ' इति । किंच – " तमसः परस्तात् " तमश्शब्दवाच्यायाः प्रकृतेः परस्तात् स्वासाधारणे दिव्यमहाविभूतिभूते वैकुण्ठाख्ये लोके वर्तमानम् । तथा, ' आदित्यवर्णं तमसः परस्तात ' ' क्षयन्तमस्य रजसः पराके ' इत्यादि । एवं समाधिकदरिद्रत्व सर्वसूक्ष्मत्व परात्परत्व महतोमहीयस्त्वा सहाय सर्वकार्यकरत्व सर्वप्रमाणातीत स्वेच्छागृहीताभिमतो रुदेहत्व सर्वात्मत्व पुरातनत्व तमसः परत्वादिभि रनन्यसाधारणै रेभिः प्रभावैः अस्यैव सर्वेश्वरत्व मुपपन्नमिति सर्वं निश्चयमिति भावः ।

एव मुक्तमहिम य द्वस्तु तदेव प्राप्यं प्रापकं चेत्याह । ( तदेवेति ) उक्त प्रभावं " तदेव " सकलयागादिफलभूत स्वर्गादिभोग जातम् " ऋतं " । कर्मज्ञानभक्तिसाध्यं मुक्तभोग्यम् "सत्यं" । तदुभयं तदात्मकत्वा त्तदेवाहुः । ( तदेव ब्रह्मपरमं कवीनां ) " कवीनां"

तदेवाग्नि स्तद्वायु स्तत्सूर्य स्तदुचन्द्रमाः,
तदेवंशुक्रममृतं तद्ब्रह्म तदापस्सप्रजापतिः ॥ ७ ॥

मेधाविनां दिव्यज्ञानिनां " परमं ब्रह्म " परमप्राप्यम् । " तदेव " आहुः । " इष्टापूर्तं " भोगमोक्षप्रापकं इष्टापूर्तरूपं श्रौतस्मार्तरूपं परं धर्मंच तदेवाहुः । " बहुधाजातं जायमानच " यद्भोगमोक्षाख्य पुरुषार्थापेक्ष बहुधाजातं जायमानं जनिष्यमाणंच यत् भूत जातं तदेवाहुः । " विश्वंबिभर्तिभुवनस्यनाभिः " भोग्यभोगोप करण भोगस्थान मोक्षरूपस्वरूप मिदं भुवनस्यनाभिः नाभिस्था नीयः आधारभूतएव बिभर्ति । तथा ' तद्यथारेषु नेमिरर्पितानाभाव राअर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञ मात्राः प्राणे र्पिता ' इति । ' यत्रविश्वं भवत्येकनीळ ' 'सद्याधारपृथिवींद्या' मित्यादि ।

अग्न्यादित्यादेरपि तस्यैव विभूतित्वं दर्शयति ( तदेवा ग्निरिति ) हविर्वहनपाकाद्युपकारकोग्नि र्य स्सतदात्मकत्वात " तदेव " अग्निशब्दवाच्यमपि तदेवेत्यर्थः । शरीरवाचिशब्दा श्शरीरिणिपर्यव स्यन्ति । यथा – ' ब्राह्मणोयजेत क्षत्रियोयजेत गौर्गच्छति मनुष्य स्तिष्ठती ' त्यादि । एवमुत्तरत्रापि । " तद्वायुः " प्राणधारणाद्युप कारकोवायुर्यः सोपि तदेव । प्रकाशनाहोरात्र विभागाद्युपकारकः "सूर्योपि" तदेव । तापशान्त्योषधि वनस्पत्याद्याह्लादनकर श्चन्द्रमाअपि । "तदु" तदेव । किं विशिष्याभिधीयते । "तदेव शुक्र" रेतः परिणामरूपं जननमरणादियुक्तं सकलभूतजात तदेव । जगत् सर्गाद्युपकारकः प्रजा पति हिरण्यगर्भोपि तदेव । एवं जगदुपकारकाणि सर्वाणि तत्वानि तत्कृतास्सर्वोपकाराश्च भगवदायत्तत्वात् भगवतैव कृता इत्यर्थः । ' यदादित्य कृतं तेज ' इत्यादि ' वेदविदेवचाह ' मित्युक्तम् । तथा मनुरपि ' प्रशासितार ' मित्यादिना सर्वात्मत्व सर्वशरीरत्व सर्वनियन्तृत्व सर्वाधारत्वादिक मभिधाय ' एतमेकेवदन्त्यग्निं मनुम न्येप्रजापतिम् । इन्द्रमेकेपरेप्राण मपरेब्रह्मशाश्वत ' मितिसस्मार ।

सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि, कलामुहू
र्ताःकाष्ठाश्चाहोरात्राश्चसर्वशः, अर्धमासामास्
वं स्संवथ्सरश्चकल्पताम् ॥ ८ ॥

सआपःप्रदुघेउभेइमे अन्तरिक्षमथोसुवः ॥ ९ ॥

एवं सर्वनियन्तु स्तस्य कालोपि विभूतिभूत इत्याह ( सर्वे निमेषा इति सार्द्धेन ) तस्य परस्य ब्रह्मण श्रुत्यन्तरसिद्धा महापुरुषत्व मादित्यवर्णत्वं पुण्डरीकाक्षत्व मकालकालत्व मित्येतेर्थाः प्रतिपाद्यन्ते । " निमेषाः " सूक्ष्माः कालावयवाः । अष्टादशनिमेषाः काष्ठाः, तास्त्रिंशत् कलाः, त्रिंशत् कलाःक्षणः । ते द्वादशमुहूर्तः । ते त्रिंश दहोरात्रं । एवं भूताः कालावयवाः " सर्वे " " विद्युतः पुरुषात् " जज्ञिरे । आदित्यवर्णात्पुरुषात् । " सर्वशः " सर्वप्रकारम् । जायन्ते । स्वरूपेणा दित्यगत्याद्युपाधिनावा यः परिणामो भवति, स तस्मा ज्जायत इत्यर्थः । पंचदशाहोरात्रा अर्धमासः । तौ द्वौ मासः । तौ द्वौ ऋतुः । तेच षट् संवत्सरः । सच विद्युद्वर्णात्पुरुषा ज्जातः । " कल्पतां " उत्पन्न इत्यर्थः ।

किंच । " स आपः प्रदुघे " स एव विद्युद्वर्णः पुरुषः । "आपः प्रदुघे " सर्वोपजीव्या अपः प्रदुग्धे । आप इति व्यत्ययेन प्रथमा । प्रदुघ इति 'लोपस्त आत्मने पदे' ष्विति तकारलोपः । " अथो " अनन्तरम् । " अन्तरिक्षं " पृथिवीं च । "सुवः"सुवरादिक मुपरिलोकांश्च । " उभे इमे " " प्रदुघे " सृष्टवानित्यर्थः ।

नैनमूर्ध्वंनतिर्यंचंनमध्येपरिजग्रभत, नतस्येशेकश्चन तस्यनाममहद्यशः ॥ १० ॥ (२)

नसंदृशेतिष्ठतिरूपमस्य नचक्षुषापश्यतिकश्च नैनं, हृदामनीषामनसाभिक्लृप्तो यएनंविदुरमृता स्तेभवन्ति ॥ ११ ॥

तस्यैवोर्ध्वाधोमध्य भागनियन्त्रन्तराभावं च दर्शयति (नैनमिति) "एनं" उक्तगुणं परमात्मानम् । ऊर्ध्वाधो मध्यभागरहितं सर्वग तम् । तद्वत्तया, "न" कश्चित् । "परिजग्रभत" नपरिगृहीत वान् । अयमस्य ऊर्ध्व प्रदेशः, अयमस्य मध्यप्रदेशः, अयमस्यतिर्यक् प्रदेशइति कश्चि त्परिच्छेत्तुं नालमित्यर्थः । परिजग्रभत- गृह्णातेर्लोटि "हृग्रहोर्भश्छन्दसी" ति भत्वम् । (नतस्येशेकश्चन) "तस्य" पर मात्मनः । अन्यः कोपि, "नेशे" । नेष्टे स एव सर्वस्य स्वामी, नान्य इति यावत् । (तस्यनाम महद्यश इति) उक्तं सर्वमाहात्म्यं "तस्यैव" "महद्यशोनाम" तस्मादन्यस्य कस्यचिदपि नसम्भावितं । नामेति सर्वश्रुतिप्रसिद्धिं प्रकाशयति ।

तस्यैव भगवतः प्राप्यत्वं प्राप्त्युपायंचाह (नसंदृशइति) "अस्य" पुरुषोत्तमस्य । "रूपं" रूप्यतेनेनेति रूपं दिव्यं वर्ष्म, तत् । कस्यापि "सन्दृशे न तिष्ठति" नसंदर्श नाय योग्यता मापाद्यते । कश्चिदप्येनं चक्षुषा नपश्यति, साक्षा त्कर्तुं न शक्नुयात । उपलक्षणत्वा च्चक्षुष स्सर्वै रिन्द्रियै र्ज्ञातुं न शक्नुयादितिभावः । संसारिणा मिन्द्रियाणां तद्रूपदर्शना साम र्थ्यं तस्य रूपस्य चाक्षुषाविषयत्वंच दर्शितं । तथा 'त्वमेव त्वां वेत्थ' 'योसिसोसि' 'सोअंगवेदयदिवानवेद' 'न

अद्भ्यस्सम्भूतो हिरण्यगर्भइत्यष्टौ ॥१२॥

क्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं ' 'यएषो ऽन्तरादित्येहिरण्मयः पुरुषोदृश्यते ' इत्यादि । वैष्णवेपुराणे तद्रूप विषये ' सपरस्सर्वशक्तीनां ब्रह्मणस्समनन्तरं । मूर्तं ब्रह्म महा भाग सर्वब्रह्ममयोहरिः ॥ तत्र सर्वमिदं प्रोत मोतञ्चैवा खिलंज गत । ततोजगज्जगच्चास्मिन् सजगच्चाखिलंमुने ' इति । अन्य त्रच '. तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महद । समस्तशक्तिरूपाणि तत्करोतिजनेश्वर ' इति । तद्दर्शनोपायमाह ( हृदेति ) हृदि ति भक्ति रुच्यते । हृत्सम्बधिज्ञानविशेषत्वात् भक्तेः । " मनीषा " मनसईषा मनीषा । लांगलदण्डा यथा लांगलसम्बन्धा लांगलीषा, तथा बुद्धिर्मनसस्सम्बधित्वेन मनीषा । मनस ईशता निश्चलावस्थानं । ' सुपांसुलु ' गिति तृतीयायाआकारः । तया इत्थम्भूतेन । " मनसा " "अभिकॢप्तः" अभिनिष्पाद्योभवेत् । यत्स्वरूपोयद्गुणो यद्वि भूतिको यत्प्रमाणको यद्रूप्योयं सर्वेश्वरः कल्प्यते, सतथाभवेदिति भावः । तथा च श्रीगीतोपनिषत्- ' येयथामां प्रपद्यन्ते तांस्तथैवच भजाम्यहम् ॥ भक्त्यात्वनन्ययाशक्य अहंविधोर्जुन । ज्ञातुंद्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप ' इति । एवमेतामृचं श्रुत्यन्तरे स्मृत्यन्तरे च पूर्वार्थं यथा पाठमाम्नाय, उत्तरार्थं ' भक्त्या च धृत्या च समा हितात्मा ज्ञानस्वरूपं परिपश्यतीति ' इति । ' य एवं विदुर मृतास्ते भवन्ति ' [ ये यादृशाः तादृशा अपरे पुरुषाः । एवं विदुः, भक्ति परा धीन इति जानन्ति । तेऽमृताभवन्ति । संसारगर्तादुत्तीर्य तत्पाद पद्मं प्राप्नुवन्ति ] इति । ' तस्य धीराः परिजानन्ति योनिं ' ' तमेवं विद्वा नमृत इह भवती ' त्यादि ।

एवं परमात्म सूक्तमाम्नातम् । एतत्सूक्तशेषतया अद्भ्यस्स म्भूत इत्युत्तर नारायणाख्योनुवाको हिरण्यगर्भ इत्यष्टावृतश्च ( अद्भ्य स्सम्भूतो हिरण्यगर्भ इत्यष्टाविति ) प्रतीकोपादानेन समाम्नाताः ।

एषां च परमात्म प्रतिपादन परागा मन्यत्र पठितानां मिहाभिन्देशसान् अर्थात्, कल्पसूत्रकार विनियोगमन्त्रेणापि क्रियमाणेन परमपुरुषसमाराधनादौ कर्माणि विनियोगः कल्प्यः । 'उत्तरनारायणेनादित्य मुपतिष्ठत' इति सूत्रकारेणास्या दित्य शब्दवाच्यस्यादित्यान्तरवस्थितस्य नारायणस्योपस्थान एव विनियोगोदर्शितः । आदित्यान्तरवस्थितो नारायणो प्यादित्य शब्दवाच्यः । 'दित्य दित्यादित्यपत्युत्तरपदाण्ण्य' इत्यादित्य शब्दादपिण्येकृते पुनरप्यादित्यइति रूपसिद्धिः । तथा च श्रुतिरपि 'असावादित्यो ब्रह्मे' ति आदित्यान्तरवास्थितं परंब्रह्मैव आदित्यशब्देन वदति । तथा 'सयश्चाय पुरुषे, यश्चासावादित्य' इत्यादित्यान्तरवस्थान भगवत श्श्रूयते ।

तत्र पुरुषनारायणोक्त पुरुषशब्दवाच्यात विश्वकर्मणोण्डसृष्टिश्च तुर्मुखादि सृष्टिः नामरूपव्याकरणं तदर्थमखिलव्याप्तिः तत्फलभूतं सर्वधारिकात्वं सर्वशब्दवाच्यत्व सर्वशेषित्व एवमेव निखिलवदवेद्यत्वं महापुरुषत्वं आदित्यवर्णत्वं तदनुबन्धि पुण्डरीकाक्षत्वं अपहतपाप्मत्वं तमसः परत्वं तद्वेदनस्य मुक्त्युपायत्व तद्व्यतिरिक्तसाधनानां मुक्त्य नुपायत्वं स्वासाधारणदिव्यलोकचारित्वं स्ववेदनार्थ अजत्वाव्ययत्वादि सर्वैश्वर्येणसह स्वविभूतिभूत देवमनुष्यादिषु तत्सजातीयत्वेन स्वेच्छयैव धर्मसंस्थापनार्थं दोषाद्यापन्निवारकत्व मनुकूलानामापदिपुरस्स्थायित्वं पूर्वजत्व मवतारा वस्थस्य समाश्रयणीयत्वं तत्समाश्रितानां मंत्रादिस्रष्टृत्वं तेषां देवादिनियन्तृत्वं एवं भूतसर्वप्रभावानुभूत श्रीभूमिमहिषीकत्वं अवतार तत्प्रकारस्या काळकाल्यत्व मादित्यादि विभूतिमत्वं सर्वप्रशासितृत्वं स्वचरणारविन्द प्रापकत्वं इत्येतेर्थाः प्रतिपाद्यन्ते ।

अनुद्यसृष्टिं पूर्वोक्तां आद्ययात्रिष्टभोच्यते ।
तत्सृष्टस्य च शेषत्व शेषिता स्रष्टुरीशितुः ॥

( अद्भ्यस्सम्भृत इत्यादि ) ' अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशु समप्रभ ' मिति प्रक्रियया भूतान्तर संसृ ष्टाभ्यो ऽद्भ्योऽण्डात्मादिप्रपंच 'स्सम्भृतः' । " पृथिव्यैरसाच्च " अण्डात्मनः पृथिव्याः रसादन्नविशेषात्, यः तदन्तर्वर्ती देवतिर्यङ्मनुष्यस्थावरा दिरूपेण विभक्तो भूतसर्गः प्रतिपादितः, सच द्विविधस्सर्गः । " विश्व कर्मण स्समवर्तताधि " सर्व सृष्ट्यादिकं कर्मास्येति विश्वकर्मा पुरुषो त्तमः । तस्मादध्यक्षभूतात् । अधिरीश्वरार्थोवा । विश्वकर्मण ईश्व रात् । " समवर्तत " लोकलोकेश्वरादिविभागेन सवृत्तः । तथा च पुरुषसूक्ते ' विराजो अधिपूरुष ' इत्यण्डसर्गः, ' पश्चाद्भूमिमथोपुरः ' इति भूतभौतिकसर्गश्चेति द्विप्रकारोयं सर्गउक्तः । एवमण्डरूपेण तदन्तर्गत चतुर्विधरूपेण ईश्वरेशितव्यविभागेन च सवृत्तस्य "तस्य" प्रपंचस्य । " त्वष्टा " सर्वनामरूप व्याकर्ताभगवान् । " रूपंविद धत् " तत्त च्चेतनकर्मानुगुण जातिगुणस्वरूप विशिष्टां स्तांस्तान्वि धाय । एति " तद्धारण पोषण नियमनैः तदात्मकतया व्याप्नोति । तथा च श्रुतिः ' तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्चत्य च्चाभवत् ' इति । " तत् " तस्मात् । एवं प्रपंचस्वरूप विधानात् तद्विभागकरणात् तन्नियमनात् तद्व्याप्तेश्च । इदं " विश्वं " " पुरुषस्य " पुरुषोत्तमस्य शेषमितियावत् । " आजानमग्रे " एवमग्रे अहं " आजान " ज्ञातवानिति वेदात्मा ब्रवीति । तथा च श्रुतयः ' पतिविश्वस्य ' ' पतिपतीनां ' ' प्रधानक्षेत्रज्ञपति र्गुणेशः ' ' भूतस्य जातः पतिरेक आसीत् ' ' यस्येमाः प्रदिशोयस्य बाहू ' ' यस्मात्परं नापरमस्ति किंचि ' इति । महाभारते ' कृष्ण एव हि भूताना मुत्पत्ति रपिचाप्ययः ।' 'कृष्णस्य हि कृतेभूत मिदंविश्वं चराचर' मित्यादि। एतदुक्तं भवति- संसारसागरमग्नानां सर्वेषां जन्तूनां इदमेवोज्जीवनं ज्ञानमिति वेदात्मनोऽभिप्राय इति ।

स्वोक्तस्य मुक्तज्ञानस्य सप्रयोजनता तथा ।

अनुपायत्व मन्येषां त्रिष्टुभोक्तं द्वितीयया ।

( वेदाहमित्यादि ) " एतं " उक्तगुणविशिष्टं । " महान्तं " " आदित्यवर्णं पुरुषं " नीलतोयद मध्यस्थ विद्युल्लेखाप्रख्यं अमन्द सौन्दर्य सौकुमार्य लावण्य यौवनाद्यशेष मंगळगुणाकरं । "तमसः" प्राकृतात् सर्वस्माल्लोकात् । " परस्तात् " उत्तरस्मिन् स्वासाधार णे परमपदे वर्तमानं पुण्डरीकाक्षं श्रियःपतिमहमेववेद । मद्भक्ताश्च महात्मानोपिजानन्ति । 'अहंवेद्मिमहात्मानं रामंसत्यपराक्रमम् । वसि ष्ठोपि महातेजा येचेमेतपसिस्थिताः' इति । मद्धृदयमजानन्तः कुदृष्टयो ज्ञानविहीनाविनष्टाभवेयुरिति भावः । तथा च भगवच्छास्त्रे श्रीसात्वते- ' नित्यंनित्याकृतिधरं तेजसासूर्यवर्चसं ' ' आवाहया म्यमरवृन्द नतांघ्रियुगम ' मित्यादि । श्रीपौष्करे - पूर्वकर्ममलातानां ध्यायिनां खेदशान्तये । स्वदन्तेन्दुचयोत्थेन ? ह्लादयन् गोगणेनतु । स्रग्वस्त्राभरणैर्युक्तं स्वानुरूपै रनूपमैः । चिन्मयै स्स्वप्रकाशैश्च अन्योन्य रुचिरंजितैः " इति । जयाख्येच - ' सूर्यायुतसहस्राभं सर्वदेव नमस्कृतम् । ध्यायेच्चतुर्भुजं विप्र शंखचक्र गदा धरम् ' ' सहस्रशिरसेतुभ्यं सहस्रवदनायच । सहस्रनयनश्रोत्र सहस्राद्भुत विक्रम । सहस्रसूर्यवपुषे सहस्रेन्दुगभस्तये । नमः परमहंसाय परा त्परतरा यच ' ' हृदं बुज गुहावास परमव्योम शायिने ' इत्यादि । श्रीमद्रामायणे- ' व्यक्तमेषमहायोगी ' त्यादि । वायुप्रोक्त शैवयोः ' वैकुण्ठेतु परेलोके श्रियासार्धं जगत्पतिः ' इत्यादि । तद्ज्ञानवतां योगिनां फलं चाह " तमेवं विद्वा नमृत इह भवति " " तं " पुरुषोत्त मम् । " एवं विद्वान् " पुरुषनारायणोत्तरनारायणाभ्यां उक्तप्रका रेण योमहात्मा मद्धृदयज्ञो विद्वान् जानाति, स इहैवामृतोभवति, संसारदशायामेव मुक्त सूरिभोग्य भगवद्गुणामृता स्वादनपरा ता

प्रविशेत इत्यर्थः । ज्ञानान्तराणां साधनान्तराणां च परमपुरुष विलक्षणस्य मोक्षस्या सामञ्जस्येनानुपायत्व माह "नान्यः पन्थाः विद्यते नाय" अयनाय- भगवत्प्राप्तये । अयं पन्था उपायो विद्यते । अस्मात्संसारगर्ता दुत्तितीर्षुभिरिदमेवेदमनुवाकोक्तं ज्ञानंप्राणिपात परिप्रश्न सेवादिभिः प्रयत्नेन सम्पाद्य मित्यर्थः । तथा च श्रुतिः 'एतद्ध्येवा क्षरं ज्ञात्वा योयमिच्छति तस्यतत्' 'ज्ञात्वातमेवं मनसाहृदा च ' भूयोनमृत्युमुपयाति विद्वान्' 'यएवं विदुरमृतास्ते भवन्ति' 'अथेतरे दुःखमेवापियन्ति' 'ज्ञात्वातमेवं मुच्यते सर्वपाशैः' 'पृथगात्मानं प्रेरितारंचमत्वा जुष्टस्ततस्तेना मृतत्वमेति' 'अमृतस्यैष सेतुः' 'ब्रह्मविदाप्नोति परं' 'ब्रह्मवेद ब्रह्मैव भवति' इति । मनुरपि 'रुक्माभ' मित्यादि । शंखः 'यंवैविदित्वानबिभेति मर्त्यो नान्यः पन्था विद्यतेचायनाये' ति ।

ननु तमसः परस्तात् स्वासाधारणे सकलवाङ्मना गोचरे परमे पदे सुखमासीनस्य पुरुषोत्तमस्य स्वरूप रूपगुणविभवादिकं एते नानुवाकद्वयेन प्रतिपादयितुमशक्यम् । प्रतिपादितेपि अनेन संसारिणा संकुचितज्ञानेन येन केन चि त्प्रतिपत्तुमपि दुष्करम् । एवं च सति ज्ञानान्मोक्षस्सुतरां दुर्लभ इत्याशंक्य परिहरति ।

विषयस्यातिभूमित्वात् ज्ञानदौष्कर्यशंकिनाम् ।
अवतारेण सौलभ्यं त्रिष्टुभोक्तं तृतीयया ॥

"प्रजापति रित्यादि" प्रजापतिः- प्रजानां अस्य द्वयावृत्तानां सर्वेषां, पतिः स्वामी, रक्षिता । पातेर्डतिः प्रत्ययः । "गर्भे" स्व सृष्टे ब्रह्माण्डे, "अन्तः" मद्ध्ये । "चरति" विग्रहवान् भूत्वा, स्वचरणकमल समाश्रयणसौकर्याय देवमनुष्यादि सजातीयतया तदा तदा स्वयमवतीर्य चेतनैस्सह चरति । तथा ह स्वयमेव 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजा

ग्यहं ' परित्राणायसाधूनां विनाशायच दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ' इति । तर्हि अविकारश्रुतिविरोध इत्यत्राह " आजायमान इति " " आजायमानः " स्वय मकामवश्यतया सतत निर्विकारोप्याश्रितार्थम् । " बहुधा " सुरनरतिरश्चामपि रूपेण । स्वेच्छया " विजायते " विविधं जायते । ' इच्छागृहीताभिमतो रुदेह ' इति । " तस्य " प्रजापतेः । " योनिं " तथावतार हेतुम् । अवतार रहस्य तत्वम् । " धीराः " प्राचेतस पराशर पाराशर्य शुक शौनक परांकुश नाथ यामुन रामानुजाचार्यादयः । " परिजानन्ति " सर्व प्रकार मवगच्छन्ति । किं विशिष्टाः । " वेधसः " विधातारः । लीलाधीन सकलबन्धन विमोक्षणादि व्यापाराः । " मरीचीनां " असंकुचित नित्यज्ञान तेजोनिधीनाम् अनन्त वैनतेय विष्वक्सेना दीनां सूरीणाम् । " पदं " स्थानम् । " इच्छन्ति " प्राप्नुवन्ति । अनेकार्थत्वाद्धातूनां तएव ज्ञाने प्रभवन्ति नान्यइति भावः । तथा च श्रुतिः ' तेहनाकं महिमानस्सचन्ते यत्रपूर्वे साध्यास्सन्ति देवाः ' इति । तथा च यामुनाचार्याः– ' त्वदाश्रिताना ' मित्यादि ।

अंशांशेनावतीर्णस्य रामकृष्णादमूर्तिभिः ।
तस्यैवसर्वशेषित्व चतुर्थ्यात्रिष्टुभोच्यते ॥

स्वविभूतिमध्ये स्वांशांशेन सुरनरतिरश्चां समानधर्म मत्स्य कूर्मादिरूपेण योवतरति सएव सर्वभोगमोक्षप्रद इत्याह ' योदेवेभ्य आतपति " मत्स्य कूर्म वराह नृसिंह वामनादि रूपेणावतरन् " यः " " देवेभ्यः " देवार्थम् । देवाः स्वाज्ञानुवृत्ति शीलाः । तत्परिपन्थिनो सुराः । आदित्य पुराणे ' तस्मिन् हरणविपस्व बुद्ध्यायेनमोहरे । किंच यिष्यन्तितेदेवाः मन्तव्यास्वितरेसुराः ' इति । वैष्णवे धर्मे – ' विष्णुभक्त परोदेवः विपरीतस्तथासुरः ' इति । गीतोपनिषदि– ' द्वौभूतसर्गौ लोकेस्मिन् दैव आसुरएवच । दैवोविस्तरशः प्रोक्त

सुरं पार्थमेशृणु, इत्यादि । " आतपति " असुरराक्षसादीन्निर्दहति । मद्रामायण महाभारतादिकं सर्वमत्र प्रमाणम् । " यो देवानां पुरो हितः " देवानामनुकूलानां सर्वभयापनोदनाय स्वप्रकाशाय च । " पुरः " पुरस्तात् , " हितः " स्थितः । सर्वेषामनुकूलानां प्रत्यक्षतामापन्न इति यावत् । कथं प्रत्यक्षतापन्न इत्यपेक्षाया माह " पूर्वो यो देवेभ्यो जातः " " यः " " पूर्वोभ्योदेवेभ्यः " देवार्थम् । . " जातः " सम्भूतः । तस्मात् प्रत्यक्षतापन्न इति । प्रतिपर्यायं यइत्युक्तार्थे शास्त्र विद्वत्प्रसिद्धिं द्योतयति । य एवं प्रसिद्धोभगवद्वतारस्तस्मैस्वात्मानं निवेदयति " नमोरुचायब्राह्मये " " रुचाय " रोचनशीलाय प्रत्यक्षतापन्नाय । रुचदीप्तौ । इगुपधलक्षणः कः । " ब्राह्मये " ब्रह्मांशभूताय । भगवदवतारायेत्यर्थः । छान्दसस्ताद्धितप्रत्ययः । अथवा- " ब्राह्मये " ब्रह्मसम्बन्धिने । ब्रह्मवेदः । तत्सम्बन्धित्वंच तत्प्रतिपाद्यत्वम् । ' अन्तरतः कूर्मं भूतं सर्पन्तं, ' सवराहोरूपं कृत्वोपन्यमज्जत ' ' त्रीणिपदा विचक्रमे' 'नमः कृष्णाय देवकीपुत्राय ' ति श्रुतिशतसहस्रैरुक्तगुणत्वेन वेदप्रतिपाद्याय । " नम इति " तस्मैस्ववात्मानमात्मीयं च उभयं समर्पयति । तथा च निरुक्तब्राह्मणे ' अहमपिनममभगवतएवाह मय्यि याः काश्चन .... भवन्ति, मम न ममतास्ति तासु भगवत एवता ' इति । तथा चाश्वलायनं गृह्ये ' नमसास्वध्वरइति नमस्कारेण वैखल्वपि नवैदेवा नमस्कारइति यज्ञोवैनमइति हि ब्राह्मणं भवती ' ति ।

नम उक्त्याच देवाव देवाश्च वशवर्तिनः ।
नमःप्रभावोविदुषां पंचम्यानुष्टुभोदिता ॥

एवं वेदपुरुषो भगवद्गुणानुभव परवशचेता आत्मानमात्मीयं च नमोवचनेन निवेद्य, पितेव पुत्र सकलप्राणिजातं भगवति प्रवणीकृत्य उत्तरयानुष्टुभा नमउक्ते माहात्म्यमप्याह " रुचं ब्राह्ममिति " " ब्राह्मं " ब्रह्मसम्बन्धि । " रुचं " तेजः । आत्मयाथात्म्य स्वरूपम् । आत्मन

हंतेजस्त्वं ब्रह्मसम्बन्धित्वं च श्रुतयोवदन्ति 'यथाग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्ति ' इति। स्मृतिरपि- 'नतद्भासयतेसूर्यो नशशांको नपावकः ' 'यद्गत्वाननिवर्तन्ते तद्धामपरमंमम ' इति । " जनयन्तः " प्रकृतिसंसर्गेण विपर्यस्तमात्मस्वरूपं यथावस्थित माविर्भावयन्तः । तथा- ' प्रकाश्यन्तेनजन्यन्ते नित्याएवात्मनोहिते ' ' ज्ञानवैराग्यमैश्वर्यं धर्मं च मनुजेश्वर ' इति । " देवा " सात्विकाग्रेसराः परमैकान्तिनः । " अग्रे " कृतयुगादौ । " तदब्रुवन् " द्विषट्काष्ट षड्वर्णादिकं मब्रुवन् । ' वयं नाम मन्त्रवामाघृतेनास्मिन् यज्ञे धारयामानमोभिः । उपब्रह्मागृण वच्छस्यमानं च श्रृंगोवर्मी द्गौरब एतत् (?) '। अथवा- देवस्य पुरतः तत् नमःपूर्वकमभिगमन मब्रुवन् अकुर्वन्नित्यर्थः । तद्वचनेन भगवच्छेषभूतं यथावस्थित मात्मयाथात्म्य मलभन्त । तथा च श्रीनारायणीये ' अहो एकान्तिन स्सर्वान् प्रीणातिभगवान् हरिः । विधिप्रयुक्तां पूजांच गृह्णातिशिरसास्वयं ॥ एकान्तिनस्तुपुरुषागच्छन्ति परमेपदे । नूनमेकान्तिधर्मोयं श्रेष्ठोनारायणप्रियः ॥ सहोपनिषदान्वेदान् येविप्रास्सम्यगास्थिताः । पठंतिविधिमास्थाय येचापियतिधर्मिणः ॥ तोभ्योविशिष्टां जानामि गतिमेकान्तिनानृणां " इति । वैष्णवेधर्मे 'नमइत्येवयोब्रूयात मद्भक्तः श्रद्धयान्वितः । तस्याक्षयो भवेल्लोकः श्वपाकस्यापिनारद ' इति । तत्रैव ' नमस्कारस्मृतोयज्ञ स्सर्वयज्ञेत्तमश्शुभः । नमस्कृत्वामहायज्ञ मश्वमेधफलं लभेत् ॥ प्रणम्यदण्डवद्भूमौ नमस्कारेणयोर्चयत् । सयांगतिमवाप्नोति नतांक्रतुशतैरपि ॥ अग्निहोत्राश्चवेदाश्च येवायज्ञास्सदक्षिणाः । तस्मिन्प्रतिष्ठितानित्यं तस्माद्विष्णुं नमाम्यहं ' ' शाठ्येनापिनमस्कारः प्रयुक्तश्चक्रपाणये । संसारस्थाणुबन्धाना मुद्वेजनकरोहिसः ' इति । श्रीगीतोपनिषदि – ' नमोनमस्तेस्तु सहस्रकृत्व ' इत्यादि । एतदुपबृह्मणीयानिवेदवाक्यानि ' भूयिष्ठान्तेनमउक्तिविधेम ' ' नमोविष्णवेबृहतेकरोमि ' ' उपतेयज्ञनमः उपतेनममुद्धोस्तेनमः (?) ' ' द्वीस्तेनमः ' इति । श्रीनृसिंहपुराणे –

नमस्कारस्स्मृतोयज्ञ स्सर्वयज्ञेषुचोत्तमः । नमस्कारेणचैकेन अष्टांगेन हरिं व्रजेत् इति । नकेवलं नमोवचन कर्तारः एवं कीर्तिनः तस्यप्रभावज्ञा अपि भवेनइत्याह “ यस्त्वेवमित्यादि ” “ ब्राह्मणः ” ब्रह्मजानातीति ब्राह्मणः, बृहद्यज्ञः । यः कश्चित् “एवंविद्यात्” नमोमाहात्म्यंजानीयात् । ‘यएतेन यजते यउचैनमेवं वेद ’ ‘ तत्पुरुषस्यविश्वमाजानमग्रे ’ ‘ वेदाहमेतं पुरुषम्महान्त ’ मितिपूर्वमेवोक्तं । तुशब्देन सर्वेभ्यो ज्ञानिभ्यो वैलक्षण्यं विवक्षितं । “ तस्य ” “ देवा ” चतुर्मुखाद्याः सर्वे । तथाच विष्णुधर्मे ‘ सर्वस्य सर्वसंस्यस्य सर्वसारस्ययोगतः । येविष्णुंप्रणता स्तेषां वशेसर्वाश्चदेवताः । इति । “ वशे ” “ असन् ” अधीना भवन्ति । ‘ दानवाविदेयाः प्रणमन्तिदेवताः ’ इतिश्रूयते । ‘ सर्वेस्मै देवा बलिमावहन्ति ’ इत्युक्तं । परमपुरुष याथात्म्यविदं महापुरुष सर्वेपि चतुर्मुखाद्यादेवाः । पुनः पुनः प्रणम्य स्तुतिवचन मुखरा स्त्वा र्थं सकलमभ्यर्च्य तदनुग्रहं प्रतीक्षन्तइत्यर्थः ।

अभीष्टप्रार्थना ( ह्रीश्चतइत्यादिना ) शेषेण । हेभगवन् ! “ ह्रीः ” क्षमा । पृथ्व्यपरपर्याया अक्षयशीर्याच । “ लक्ष्मीः ” सर्वैर्लक्षणीया समाश्रयणीयाच । तेउभे । “ ते ” तव महापुरुषस्य । “ पत्न्यौ ” सकलसंरक्षण महाध्वरदीक्षितस्य सहधर्माचरणे दीक्षिते इतियावत् । ‘ पत्युर्नोयज्ञसंयोग ’ इति नकारोंतादेशः । तथाच श्रुतिः – ‘ अस्ये शानाजगतोविष्णुपत्नी ’ ‘ महींदेवींविष्णुपत्नीं ’ इति । ‘ ईश्वरींस र्वभूतानां त्वामिहोपह्वयेश्रियं ’ इति श्रीसूक्तंच । ‘ ईशानादेवीभुवनस्या धिपत्नी ’ ‘ इमांखनाम्योषधिं ... शतस्यांआच्छिद्रांपारयिष्णुं’इति । ‘अदितिर्देवा’ इत्यनुवाकश्च । हेश्रियःपते ! अहश्चरात्रिश्च “ अहोरात्रे ” ते । “ पार्श्वे ” पुरुषस्य यथापार्श्वे विधेये, तथा अहोरात्र्याद्यात्मा कालोविधेयइति । तस्मादिदानीं मुक्ति मन्यांश्च भोगादीं नविलंबित मेवास्माकं कल्पयेत्यभिप्रायः । तथाच महाभारते ‘ कालस्यचहि मृत्योश्च जंगमस्थावरस्यच । ईशतेभगवानेक स्सत्यमेतद्ब्रवीमिते ’ ‘ का

लचक्रं जगच्चक्रं युगचक्रंचवेशादः । आत्मयोगेनभगवान् परिवर्तयते निश'मित्यादि । अहोरात्रशब्देन सूर्यचन्द्रौ लक्ष्येते । तथाच श्रुतिः 'धाता यथापूर्वमकल्पयत ' ' भीषास्माद्वातः पवते भीषोदेतिसूर्यः ' इत्यादि । " नक्षत्राणि " सर्वाणिज्योतींषि । तव "रूपं" शरीरम् । वैष्णवेपुराणे- 'सर्वेध्रुवामहाभाग प्रबुद्धा वातरश्मिभिः । गृहर्क्षताराधिष्ण्यानि ' ' यानि मूर्ता न्यमूर्तान्यत्रवा तत्रवा क्वचित् । सन्तिवैवस्तुजातानि तानिसर्वाणि तद्वपु' रिति । " अश्विनौव्यात्तं " अश्विनौसंसारिणां सकलतापभिषजौ तव ' व्यात्तं ' आस्यव्यादानम् । वाचिकप्रयत्नइति यावत् । सर्वेषां प्राणिनां अश्विनिर्दिष्टानां औषधानां रक्षकत्वात् त्वमेव सकलै श्वर्याणां सकलग्रहादीनां सकलभिषजां च सर्वथानिर्वाहकः । तस्मा दस्माकं सकलम् । " इष्टं " सकलमभिलषित मैहिकामुष्मिकं सा क्षादपवर्गं च । " मनिषाण " अनुमन्यस्व । देहीति यावत् । मनो तेर्व्यत्ययेन श्नाप्रत्यये ' सिब्बहुलंलेटी ' ति सिपि लेटिरूपम् । धात्वन्तरं वा छान्दसमन्वेष्टव्यम् । " अमुं मनिषाण " अमुमिति विशे षप्रार्थना , युष्मच्चरणारविन्दमेवा स्मभ्यं देहीति । किं विशिष्या भिधीयते " सर्वमनिषाण " यत् संसारिणां हितत्वेन तवमतं तत्सर्वं त्वमेव देहीति । तथा च श्रीवत्सांक मिश्राः ' तदपि किमपि हन्त दुर्व्य सशनाशात विवशतया यदभ्यर्थये ' इत्यादि । तथा च श्रुतयः ' एतद्ध्येवाक्षरंज्ञात्वा योयदिच्छति तस्य तत् ' ' योवेदानिहितंगुहायां परमेव्योमन् , सोऽश्नुते सर्वान् कामान् सह ब्रह्मणाविपश्चिते ' ति । श्री वैष्णवेपुराणे- 'तस्मिन् प्रसन्ने किमिहास्त्यलभ्य ' मित्यादि । वैष्णवे धर्मे 'रत्न पर्वतमारुह्य यथारत्नं नरोमुने । सत्वानुरूपमादत्ते तथाकृष्णान्म नोरथान् ' ' भौमान् मनोरथान् स्वर्गं स्वर्गिवन्द्यंच यत्पदम् । प्राप्नो त्याराधितेविष्णौ मुक्तिमप्यतिदुर्लभां ' ' यद्दुर्लभंयद्दुरापं मनसोपन्नगो चरम् । तदप्यप्रार्थितंध्यातो ददातिमधुसूदनः ' ' एश्वर्यसन्ततिं श्रेष्ठा मारोग्यं द्रव्यसम्पदः । ददातिभगवान् विष्णुः गतिमग्र्यां च तोषितः '

'शरीरारोग्यमर्थांश्च भोगांश्चैवानुषंगिकान् । ददातिध्यायिनांनित्य मप वर्गप्रदोहरिः' इत्यादि परस्सहस्रवचनानि द्रष्टव्यानि ।

( हिरण्यगर्भ इत्यष्टौ )

तत्राद्यया भगवतः परत्वं जगत्कारणत्वं जगद्व्याप्तिः तत्फलादिकं च प्रतिपाद्यते । " अग्रे " सृष्टेः प्राक्प्रळयावस्थायाम् । " हिरण्य गर्भः " हिरण्यस्य रमणीयस्य परमव्योम्नो गर्भभूतः । स्वासाधारणे दिव्या स्थाने । " समवर्तत " सम्यङ् निवसतिस्म । तथा च ' देवानां पूरयोध्या ' ' तस्यां हिरण्मयः कोशः ' इत्यादिषु परमपदस्वरूपं दर्शि तम् । " भूतस्य जातः पतिरेक आसीत् " ततः सृष्टिकाले सर्वाणि भूतजातानि सृष्ट्वा तेषां पतिर्नियन्ता चासीत् । स एव पुरुषोत्तमः " दाधारपृथिवींद्यां " ' पृथिवीं ' पृथिव्युपलक्षितान् अधो लोकान् व्याप्य । ' दाधार ' ' उत ' अपि च ' द्यां ' स्वर्गोपलक्षितानुपरि लोकांश्च दाधारेति सम्बन्धः । " कस्मैदेवायहविषा विधेम " य एव सर्वरक्षादि विनोदनः, तस्मै किंशब्दवाच्याय महते प्रजापतये आप न्नानां सर्वेषां रक्षणायैव एवं जगत्सृष्ट्यादिभि स्सर्वकालं संक्रीडमानाय । " हविषा " आत्मरूपेण हविषा, पुरोडाशादिना वा । " विधेम " सपर्यां विदधीमहीति प्रार्थना । विधेमेति ' लिङ्याशिष्यङ् ' ।

द्वितीयया तस्यैव सर्वानुरञ्जकत्वं ऐश्वर्यं चाह ( यःप्राणत इति ) " प्राणतः " जीवतः स्थावरस्य । " निमिषतः " प्राणादि कर्तुं स्संकु चित ज्ञानस्य पादादि विहीनस्य उदरसर्पिणो जन्तोः । " जगतः " जंगमस्य । गमनशीलस्य देवतिर्यङ्मनुष्याख्यस्य प्राणिजातस्य । तथा ये " द्विपदः चतुष्पदः " अपादोदरसर्पिणः इति जन्तूनां त्रैविध्यमाम्नातम् । " महित्वा " महत्त्वेन । " एक इत् " एक एव न द्वितीयः । " राजा बभूव " अनुरञ्जको भूत । तस्य तस्य धारक पोषक भोग्यत्वादि प्रदानेन प्रतिपक्ष निरसनेन संवर्धनेन च संरक्षको भूत् । यः अस्य स्थावर जंगमात्मकस्य द्विपदः चतुष्पदश्च " ईशे "

इष्टे । नियामको भूत । तस्मै । " कस्मै देवाय हविषा विधेम " इति गतम् । जगत इति गमेः क्विप् । गमःक्वावि[redacted]क्लोपः 'ह्रस्व स्ये ' तितु गागमः । ' द्युत गमि जुहोतीनां द्वे ' ति द्वित्वम् ।

तृतीयया तस्यैवान्यासम्भावना भूमिभूतमौदार्यं दर्शयति ( य आत्म दाइति ) " यः " " आत्मदाः " समाश्रितेभ्यः स्वाश्रयण महाधर्मस्या नुगुणं अन्यत् प्रदेय मजानन् स्वात्मानं ददाति । एवं स्वयैव परया कृपया आत्मानं प्रदाय विभूतिद्वय निर्वाहक मात्मानं भोक्तुं बलमपि ददातीति " बलदाः "। ददाते विजन्तं पदद्वय मिदं । अनुकूलेभ्यः प्रदातुस्तस्य सर्वेश्वरस्य सर्वत्रान्यत्रा सम्भावनीयं महामहिमानं दर्शयति ( यस्य विश्व इत्यादि ) " विश्वे " प्राणिनः । " यस्य " "प्रशिषं" प्रशीः प्रशासनं, दिव्याज्ञाम् । " उपासते " शिरोभिः । ' भीषास्मा द्वातः पवते ' ' एतस्यवा अक्षरस्य प्रशासन ' इत्यादि श्रुतिः, तस्याज्ञां प्रदर्शयति । ' श्रुतिस्स्मृति ममैवाज्ञा ' ' प्रशासितारं सर्वेषां ' 'शास्ता विष्णुरशेषस्ये ' त्यादिका स्मृतिश्च । " यस्य " " देवाः " द्योत नादि गुणयुक्ता स्सर्वसमाराध्या वरप्रदा श्चेन्द्रादयोपि यस्य शेषभूता इति यावत् । तदाज्ञानुवर्तित्वे मनुष्यादीनां देवोत्तमानां इन्द्रादीना मपि नविशेषइति यस्य " दैवा इति दर्शितम् । " यस्य छायामृतम्ति" " अमृतं " मरणादि धर्मरहितं अक्षरं परमं पदम् यत् । तत्, यस्य छायावत् । विधेयं अनुवर्तनैकस्वरूपमित्यर्थः । एतेन दिव्याधाः त्रिपान्महाविभूते रनुवर्तनाप्रकारोदर्शितः । तथा मूलसंहि तायां ' तद्यथा तरुणवत्सावत्सं वत्सोवामातरं छायावासत्व मनुगच्छेत, तथा ' इति । ' अदुग्धा इवधेनवः ' इत्यादि च । " यस्य मृत्युः " सकलप्राणिमारणादि कर्माधिकृतो मृत्यु यस्य शेषभूत इत्यर्थः । तथा " मृत्युर्धावति पंचम " इति । तथा च स्वयं यमः प्राह " प्रभुरहमन्यनृणां नवैष्णवानां ' ' हरिगुरुवशगोस्मि नस्वतन्त्रः ' 'प्रभ वति संयमने ममापि विष्णु ' रिति । " कस्मैदेवाये " ति गतम् ।

चतुर्थ्या विभूतिविशेषं दर्शयति. ( यस्येम इति ) " इमे " " हिम वन्तः " स्निग्धशीतलच्छायावन्तः घनाः घनसलिलादि पदार्थाधाराः । यस्य शेषभूताः पर्वत । " महित्वा " महत्त्वेन । " यस्य समुद्रं रसयासहाहुः " ' रसया ' भूम्या । रसाशब्द उपलक्षणार्थः । तत्रस्थैः प्राणिभि स्सह । ' समुद्रं ' अर्णोनिधिं, तत्स्थं प्राणिजातं च " यस्याहुः " यस्य शेषभूत इति तद्विदः प्राहुः । तथा ' कृष्णस्य हि कृते भूतमिदं विश्वं चराचर ' मिति । " यस्येमाः " ' इमाः ' प्राच्यादयः प्रधानदिशः तत्स्थाः प्राणिनश्च । यस्य शेषभूता इति । " प्रदिशोयस्य बाहू " ' प्रदिशः ' विदिशः । तत्स्थाः प्राणिनश्च । ' यस्य बाहू ' बाहुवत् विधेया इति । अथवा ' यस्येमाः प्रदिशः ' इमाः प्रधानाः दिशः । ' यस्य बाहू ' यस्येति वाक्यभेदात् विदिशश्चेत्यर्थः । तस्मै, " कस्मैदेवाये " ति गतम् ।

पंचम्या सर्वलोकानां लोकेश्वराणामपि तदधीनत्वं दर्शयति (यंक्रन्दसीइति) " यं " उक्तगुणम् । " अवसा " अवनेन हेतुना । "तस्तभाने" अतिसस्तम्भनशीले । यङ्लुगन्तात् ताच्छील्येशानश् । " क्रन्दसी " असुरभयादिनाक्रन्दमाने इमेद्यावापृथिव्यौ, " मनसा " " अभ्यैक्षेतां " अभि मुख्येन निज भीति निरसनार्थं ' ऐक्षेतां ' अक्षीण प्रार्थनताम् । " रेजमाने " दीप्यमाने अपि । यमेव सर्वकाले स्वरक्षणाय प्रार्थयेते इति । " यत्राधिसूर उदितो व्येति " ' यत्राधि ' यस्मिन् स्वामिनि नियन्तरि सति । ' अधिरीश्वर ' इति कर्मप्रवचनीयसंज्ञायां 'यस्मादधिकं यस्य चेश्वरवचन' मितिसप्तमी । ' सूरः ' सूर्यः । "उदितो" उद्गमे उदेति, अस्तमयेव्येति । यस्मिन् ईशेसति उदयास्तमययोस्सूर्यः प्रभवतीत्यर्थः । श्रीमद्रामायणे ' सूर्यस्यापि भवेत् सूर्योह्यग्नेरग्निः प्रजापति ' रिति । ' कस्मै देवाये ' ति गतम् ।

पुनरपि तस्य महिमातिशयः षष्ठ्या प्रपंच्यते ( येनेति ) " येन " सर्वेश्वरेण । " द्यौः " विद्याधरादीनां क्रीडादिस्थानम् द्वितीयो लोकः । " उग्रा " सूक्ष्मावयव स्वरूपा तेजोमयी । " पृथिवी "

प्रथुतरांस्थूलावयवसमवस्थानः । " दृढ "-अविचलितसंस्थानं । येन समवस्थिते इतियावत् । " येनस्तभितं " येन परमसुखस्थानं 'सुवः' स्वर्गाख्योलोकः, " स्तभितं " यथास्थानं निश्चलमवस्थापितम् । " येन नाकः " दुःखासम्भिन्नो ब्रह्मादिलोकश्च स्तभितः सुखोत्तरं स्थापितः। " योन्तरिक्षेरजसोविमानः " यश्च रजसः परस्ताद्वर्तमाने, ' अन्तरिक्षे ' परमाकाशे । ' विमानः ' विगतमानः । अप्रमेय स्वरूपगुण विभवः तस्मिन् वैकुण्ठाख्ये दिव्यलोके अयोध्याभिधानायां दिव्यपुर्यामानन्द मये मण्टपरत्ने श्री परिच्छिन्ने दिव्यपर्यंके दिव्यसूरिभिः परिचर्यमाण चरणारविन्दो नित्यं यथासुखमास्ते । ' कस्मैदेवाये ' ति पूर्ववत् ।

सप्तम्या तेनैव ब्रह्मसृष्टिं देवानां नियमनं च दर्शयति ( आपोह यदिति ) " महतीः " बृहत्यः, प्रळयावस्थिताः । " अग्निजनयन्तीः " अग्रगण्यं ब्रह्माणं जनयितुं क्षमाः " दक्षं " उत्साहम् । दक्षते उत्साहक र्मणारूपम् । " दधानाः " ब्रह्माण्डजननयोग्योत्साहवत्यः । "आपःविश्व मायन् " सर्वाणि भूतानि व्याप्तवत्य इति यावत् । ' अपएव ससर्जादौ तासुवीर्य मपासृजत ' इति । एव मपःसृष्ट्वा तन्मुखेन सर्व मुत्पादितवान् यतः । ततो हेतोः । " देवानां " ब्रह्मादीनाम् । " एक एव " असुः निरवर्तत " समाधिकरहितः प्राणवत् धारको निर्वृत्तो भूत् । तस्मै " कस्मैदेवाये " ति पूर्ववत् ।

अष्टम्या तस्यैव ब्रह्मादीनां स्वामित्वं दर्शयति ( याश्चिदापइति ) चिदित्यवधारणे । यएव । " दक्षं " दधानाः जनयन्तीः । आपः । व्यत्ययेन द्वितीयार्थे प्रथमा । " महिना " महिम्ना । " पर्य पश्यत " ब्रह्माण्डादिकं यथाजनयितुं समर्थाभवन्ति तथावीक्षणं कृत वान् । " य " श्च । " देवेष्वधि " सर्वेषां देवानां स्वामी । " देवः " जगत्कर्मधर्मा । " एकः " समाधिकरहितः । " आसीत् " स्वयमेवा सीत् नान्य प्रेरितः । तथा " आनीदवातँ स्वधयातदेकं " इति । तस्मै " कस्मै " महते प्रजापतये । " देवाय " निरुपाधिकक्रीड ।

एषहिदेवः प्रदिशोनुसर्वाः पूर्वोहिजात स्सउ
गर्भेअन्तः, सविजायमान स्सजनिष्यमाणः प्रत्यं-
ङ्मुखास्तिष्ठति विश्वतोमुखः ॥१२॥

विजिगीषादि सर्वार्थवते । "हविषा" आत्मरूपेण । पुरोडाशा
दिभिर्वा । 'विधेम' तस्मै शेषभूताः परिचर्यां विदधीमहि ।

एवं परमात्मसूक्तं समाप्य उक्तमहिम्नः पुरुषोत्तमस्य जगत्कार
णस्य कल्याणगुणकीर्तनपरं द्वितीयं सूक्तमारभ्यते । "एषही"
इत्याद्यास्त्रिष्टुभः ।

तत्राद्यया जगत्कारणस्य द्योतनादिनिबर्हणगुणानां निरतिशयत्वं
प्रतिपाद्यते ( एषहिदेव इति ) एष इति पूर्वोक्तमहिमानं वक्ष्यमा
णानां गुणानामंगुल्येव निर्दिशति । "देवः" निरुपाधिक द्योतना
दिगुणगरिष्ठः । 'ही' ति सर्वत्र श्रुत्यादि प्रसिद्धिं दर्शयति ।
"प्रदिशोनु सर्वाः" सर्वाः प्रदिशः प्रधानाः दिशः । "अनु" अनुगत
वान् व्याप्तवान् । अनेन देशतोनवच्छिन्नत्व मुक्तम् । अय
मेवं गुणः । "पूर्वः" पुरैव । "जातः" अनादिरितियावत् ।
"सउगर्भे अन्तः" सर्वलोक सर्वप्राणिनां मध्ये स उक्तगुणगण
विशिष्टएवान्तर्वसति । अनेन वस्तवपरिच्छिन्नत्वं दर्शितम् । "सविजाय
मान स्सजनिष्यमाणः" वर्तमानेष्वनागतेषुचान्तर्यामितयास्थित्या विशिष्ट
निर्देशः । अनेन कालानवच्छिन्नत्वं दर्शितम् । किंच । "प्रत्यङ्
मुखास्तिष्ठति" एष परमात्मा मुखाद्युपक्रमादारभ्य कार्यजातं 'प्रत्यक्' प्रत्ये
कमश्नन्व्याप्नुवन्तिष्ठतीति पूर्वोक्तसामानाधिकरण्य निर्देश हेतुर्दर्शितः ।
छान्दसो मुखाइति वर्णविकारः । अथवा "प्रत्यङ्मुखास्तिष्ठति" प्रपंचाभि
मुखस्तिष्ठतीति व्यत्ययेन बहुवचनम् । एक मुखकस्य सर्वाभिमुखत्वं
कथमित्यपेक्षाया माह ( विश्वतोमुख इति ) सर्वत्र मुखकार्यसमर्थः ।

विश्वतश्चक्षुरुतविश्वतोमुखो विश्वतोहस्तउतविश्वतस्पात् , संबाहुभ्यांनमतिसम्पतत्रै द्यावापृथिवी जनयन्देवएकः ॥ १३ ॥

वेनस्तत्पश्यन्विश्वाभुवनानिविद्वा न्यत्रविश्वं भवत्येकनीळं, यस्मिन्निदंसञ्चविचैकं सओतःप्रोतश्चविभुःप्रजासु ॥ १४ ॥

तथा " विश्वतोहस्तः " सर्वैः प्रदेशैः हस्तकार्यक्षमः । " विश्वतस्पात " सर्व प्रदेशैः गमनकारी । तदेवोपपादयति ( सम्बाहुभ्यां नमतीति ) " द्यावा पृथिवी " द्यावा पृथिव्युपलक्षिते लीलोपकरण भोगोपकरणे । तत्र स्थान् प्राणिनः " बाहुभ्यां " यथासंस्थानं यथा स्वभावम् । " जनयन् " उत्पादयन् । " सन्नमति " यथास्थानं स्थापयति । " पतत्रैः " पतनसाधनभूतैः करणकळेबरादिभिः संबद्धांश्च करोति । " देवः " पूर्वोक्त गुणविशिष्टः । " एकः " असहायः ।

एवं सर्वज्ञत्व सर्वशक्तित्व सर्वधारकत्व समाधिकदरिद्रत्वादिक मुक्तम् । वेन इत्यादिना तस्य सौशील्यवात्सल्यादिकं दर्शयति ( वेनस्तत्पश्यन्निति ) " यत्रविश्वम्भवत्येकनीळं " ' यत्र ' कारणभूते सर्वेश्वरे । ' विश्वं ' कार्यकारणाकारेणोभयावस्थं चेतनाचेतनात्मकं जगत् । ' एकनीळं ' एकस्मिन्नीडे वर्तते । डळयोरभेदं स्मरन्ति । "यस्मिन्निद संच विचैकं" "यस्मिंश्च" 'इदं' विश्वम् । प्रळयकाले । 'एकं' एकी भूतम् । 'समेति' 'व्येतिच' कार्यावस्थायाम् । 'वेनः' कामयमानः जगद्रक्षणकामोयम् । "विश्वानिभुवनानि " भूतानि "पश्यन्" तासु "प्रजासु" तद्रक्षणार्थम् । "ओतश्च" " प्रोतश्च" वर्तते ।

प्रतद्वोचेअमृतंनुविद्वान्गन्धर्वोनामनिहितंगुहा सु,(३)त्रीणिपदानिनिहितागुहासु यस्तद्वेदसवितुः पितासत् ॥ १५ ॥

साक्षाद्व्याप्तृत्वमोतत्वम् । परम्परयाव्याप्तृत्वं प्रोतत्वम् । 'वेञ्' तन्तुसन्ताने । अतो निष्ठायां यजादित्वात् सम्प्रसारणम् । तथा 'सएकाकी नरमेत' 'तदैक्षतबहुस्यां प्रजायेय' 'सोकामयत बहुस्यां प्रजायेय' 'सतपोतप्यत' 'तदेवानुप्राविश' दित्यादि ।

एवं जगत्कारणत्वव्याप्त्यादिभिः भगवतएवस्वामित्वं प्रदर्श्य वेदवक्तृत्वमपि दर्शयति (प्रतद्वोच इति) "विद्वान्" सर्वज्ञः । गां वेदरूपांवाचं प्रळयकाळेधारयतीति "गन्धर्वः" "तत" "अमृतं" पूर्वापर कोटि रहितम् । "नाम" वेदाख्यं शब्दजातम् । "प्रवोचे" प्रोवाच । प्रकर्षेणोक्तवान् । वकारोपजनश्छान्दसः । "नु" इति पुरातनकाळ सूचको निपातः । आदिकाळे चतुर्मुखंसृष्ट्वा तस्मै नित्यं वेदाख्यं, शब्दजालं-'प्रोचे' अध्यापयामास । यद्वा पूर्वार्धेनैनमर्थं समुच्चिनोति । "गुहासु निहितं" प्रळयकाळे स्वहृदये निहितं । तथाहि-"योब्रह्माणं विदधातिपूर्वं योवैवेदांश्च प्रहिणोति तस्मै" 'पूर्वेपूर्वेभ्योवचएतदूचुः' इति । (त्रीणीति) चतुष्पदो वेदस्य स्वलीलाविभूतेः वाचक मेकं पादं चतुर्मुखायप्रोचे, त्रिपान्महाविभूते र्वाचकानि त्रिणि पदानि "निहितागुहासु" परमेपदे संवृतेषु प्रदेशेषु निहितानि । संसारिणाम् देवादीनांचा गोचराणि तत्रैव प्रतिष्ठितानि । गुहा त्रीणि निहिता नेंगयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति । एवं । "यस्तद्वेद" भगवतो वेदप्रवक्तृत्वं योवेद । सः । "सवितुःपिता" सवितुरुत्पादयितुः पितुरपि पिता । "असत्" स्यात । अस्तेर्लेटि 'लेटोडाटा' वित्यड्भावः । एवं भगवद्वेदवक्तृत्वं योवेद सविद्वान् सर्वस्य रक्षको भवेदित्यर्थः ।

सनोबंधुर्जनितासविधाताधामानि वेदभुवनानि विश्वा, यत्रदेवाअमृतमानशानास्तृतीयेधामान्यभ्यै रयंत ॥ १६ ॥

परिद्यावापृथिवीयंतिसद्यः परिलोकान्परिदिशः परिसुवः, ऋतस्यतंतुंविततंविचृत्य तदपश्यत्तदभ वत्प्रजासु ॥ १७ ॥

उक्तमहिम्नः पुरुषोत्तमस्य सर्वप्रकारबन्धुत्वं दर्शयति ( सनो बन्धुर्जनितेति ) " नः " अस्माकं । " सः " उक्तमहिमा । "बन्धुः " अनादिसर्वप्रकारबान्धवः । तदेवविशिनष्टि । " स " एव " जनि ता " उत्पादयिता । " स " एव " विधाता " सएवश्रेयसां कर्ता । ( धामानिवेदभुवनानिविश्वा ) " धामानि " धारकाणि । " भुवनानि " उचितान् लोकान् । " विश्वा " विश्वानि । स र्वाणि । ' वेद " अस्येदमुचित मस्येद मुचितमिति जानाति । स एवविशिष्यते ( यत्रेति ) " यत्र " यस्मिन् पुरुषोत्तमे । " देवाः" साध्यास्सूरयः । " अमृतं " तद्गुणरूपं " आनशानाः " व्याप्तवन्तः । ' छिटःकान ' जिति कानच् । " तृतीये " सुकृतदुष्कृतोभयभोग्य भूम्यन्तरिक्षाभ्यां सुकृतैकभोग्यात स्वर्गाच्चो परिवर्तमाने । " धामानि " तजांसि । भगवत्सेवासमुचित ज्ञानशक्त्यादिरूपाणि । " अभ्यैरयन्त " आभिमुख्येनागमन्नितियावत । तथा ' मातापिताभ्राता निवासश्शरणं सुहृद गतिर्नारायणः ' ' योनःपिता जनितायोविधाता योनस्सता अभ्याजजान ' ' पितात्वमस्य जगतो माताधातापितामहः ' ' यत्र देवयवोमदन्ति ' ' परमेव्योमन् सोश्नते सर्वान् कामान् सहब्रह्म णा विपश्चिते ' ति ।

एवं परमबन्धु र्भगवान् सर्वासां प्रजानां शुभाशुभंकर्म साक्षा त्कृत्य तदनुगुण न्ता स्सर्वत्र प्रवर्तयतीत्याह ( परिद्यावापृथिवीयन्ति सद्यइति ) ' सद्यः " समानेहनि, सृष्टेः समकालंवा । ताः प्रजा येन

परीत्यलोकान्परीत्यभूतानिपरीत्यसर्वाः प्रदिशो दिशश्च, प्रजापतिःप्रथमजाऋतस्यात्मनात्मानमभि सम्बभूव ॥ १८ ॥

संदसस्पतिमद्भुतं प्रियमिंद्रस्यकाम्यं, सानिमेधा मयासिषं ॥ १९ ॥

कर्मणा । "द्यावापृथिवी परियन्ति" परिगच्छन्ति । येन कर्मणा । "लोकान्" ब्रह्मादीनां "परियन्ति" "दिशश्च" "सुवश्च" स्वर्लोकम् । "परियन्ति"। "ऋतस्य" यज्ञादेः कर्मणः । "तन्तुं" प्रवाहम् । "विततं" विस्तृतम् । "विचृत्य" स्वीकृत्य । तदनुगुणं प्रवर्तयतीति । अपि च "प्रजासु" "तत" कर्मणा । "अपश्यत्" साक्षाच्चक्रे । "तदभवच्च" तस्य कर्मणो हेतुरभवत् । भगवत्प्रीति हेतुः प्रजानां कर्म । तेन सर्वत्र जनन मरण भोगमोक्षादिषु प्रवर्तयतीत्यर्थः ।

इदानीं भगवत स्तन्मूलां व्याप्तिं दर्शयति (परीत्येति) लोका दिकं सर्वथा "परीत्य" व्याप्य । "प्रजापतिः" प्रजानां पाता सर्वेश्व ऐश्वरः । सएव विशिष्यते (प्रथमजेति) "ऋतस्य" यज्ञादेः कर्मणः फलस्य "प्रथमजाः" पूर्वमुत्पादकः । प्रथमजा इति "जनसनखने" ति विट् । 'विड्वनोरनुनासिकस्या' दित्याकारः । "आत्मना" आत्मीयेन मनसा संकल्पेन । "आत्मानं" स्वशरीरभूतं चेतनाचेतनात्मकं वस्तुजातम् । 'अभिसम्बभूव' अभित स्सम्प्राप्तवान् । तेषु सर्वे ष्वनुप्रविश्याधिष्ठातृत्वेन तस्थाविति यावत् । भवतेः प्राप्तिकर्मणो व्यत्ययेनपरस्मैपदम् ।

एवं सर्वव्यापकं सर्वशरीरकं सर्वात्मभूतं पुरुषं प्रपद्य इत्याह (सदसस्पति मिति) गायत्री । सीदन्त्यस्मिन्निति "सदः" । तस्य "पतिं" पातारम् । संरक्षकम् । "अद्भुतं" आश्चर्यगुणगरिष्ठम् । "प्रियं" तस्य प्रणयितारम् । "इन्द्रस्यकाम्यं" इन्द्रस्य-

उद्दीप्यस्वजातवेदोपघ्नन् निर्ऋतिंमम,(४)पशूँ
श्चमह्यमावहजीवनंश्चदिशोदिश ॥ २० ॥

मानोहिँसीर्ज्जातवेदोगामश्वंपुरुषंजगत् , अबि
भ्रदग्नआगहिश्रियामापरिपातय ॥ २१ ॥

निर्वोढुः सर्वस्यास्य नियन्तुः । त्रैलोक्याधिपतेर्वा अण्डाधिपतेर्वा " काम्यं " कामनार्हं " सनिं " सननीयम् । भजनीयम् । ' वनषणसम्भक्तौ ' । " मेधां " मेधाविनं । एवं सर्वनिर्वोढारन्तं । " अयासिषं " अयानि । प्राप्नुवानि । ' छन्दसि लुङ्लङ्लिट ' इतिलुङ् ।

एवं त्वच्चरणारविन्द शरणवरणोपायस्य ममविरोधिभूतं सर्व दुरितं निरस्यापेक्षितं सर्वं सन्धुक्षयेति प्रार्थयते ( उद्दीप्यस्वेति ) अनुष्टुप् । हे " जातवेदः " जातानां असद्व्यावृत्तानां सर्वेषां प्राणिनां " वेदः " सर्वज्ञातियावत् । " अपघ्नन्निर्ऋतिंमम " त्वत प्राप्तिविरोधिभूतं पापादिकं ' अपघ्नन् ' नाशयन् । ' लक्षणहेत्वो ' रितिशता । " मम " अलक्ष्मीमपहन्तुं । " उद्दीप्यस्व " उद्ध ध्यस्व । अवहितमनाभवत्यर्थः । एवं त्वत्प्रसादापहतनिर्ऋति काय " मह्यं " " पशूंश्च " " आवह " धनानिच । " आवह " । आनय । " जीवनं " अन्नादिकञ्च । " दिशः " सर्वदेशाधिपतित्वं च । " दिश " प्रयच्छ ।

निर्ऋतेरपघाते प्रयोजनमाह ( मानइति ) अनुष्टुप् । हे " जातवेदः " " नः " अस्माकं भवन्तं प्रपन्नानां । " गामश्वंपुरुषं " पशुजातिदासादीन् । " जगत् " भोगस्थानानिच । सानिर्ऋतिः । " माहिंसीत " माबाधिष्ट । किञ्च ।

पुरुषस्यविद्मसहस्राक्षस्य महादेवस्यधीमहि, त
न्नोरुद्रःप्रचोदयात् ॥ २२ ॥

हे " अग्ने " अग्रनेतः । निर्ऋतिवेषदर्शनेन वयम्भीताः । अस्माकं त्व निर्ऋतिः माभूः ! " अबिभ्रत " तद्वेषं तदायु धानिवा अधारयन् अस्मद्रक्षणार्थं । " आगहि " आगच्छ । आगत्य । " मा " " श्रियापरिपातय ' भोगादिलक्षणयैह लौकिकया लक्ष्म्याच सर्वतः सगमय । आगहीति गमेर्लोटिशपो लुक् । अनुनासिक लोपः ।

अस्मिन्ननुवाके जगत्कारणतयोक्तं परमपुरुषं सूक्तोक्तगुण विशिष्ट तया प्रत्यभिज्ञाप्य तच्छेषत्वेन सर्वमनुसन्धेयमित्याह (पुरुषस्येति) "पुरुष स्य" अत्र पुरुषसूक्तेपि सर्वपूरकत्वेन निर्दिष्टस्य। "सहस्राक्षस्य" 'सहस्राक्ष स्सहस्रपात्' 'विश्वतश्चक्षु'रित्यादिना निर्दिष्टस्य सार्वज्ञ्यादिगुणाकरस्य । "महादेवस्य" 'सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्येमहति महीयते, त स्मादुच्यते महादेव'इति श्रुत्यैवप्रतिपादितस्य । तथान्यत्र 'वेदाहमेतं पुरुषं महान्तं' 'महतोमहीया' निति । महत्त्वगुण विशिष्टस्य । तमेनं सर्वकालं "विद्म"इममर्थं"धीमहि" सदाध्यायेमच । सम्प्रसारणात्मनेपदे छान्दसे । सद्यैव 'उतामृतत्वस्येशानः' इति मोक्षहेतुत्वेन निर्दिष्टो रुद्रशब्दे नोक्तः पुरुषोत्तमो रुद्रः । 'रुद्रो बहुशिरा ' इति च । संहारकाले प्रजा स्संहरन् रोदयतीति रुद्रः । रुः दुःखम् , दुःखहेतुं वा द्राव यतीति रुद्र इत्युच्यते । तस्मात् शिवः परमःकेवल मिति लैंगे । संसारदुःखं तापत्रयादिकं द्रावयतीति निर्वचनात् सहस्रनामादिषु प्रसिद्धोरुद्रोनारायणएव । नैमित्तिकसंहार हेतुभूत रुद्रस्तु जातः । तथा श्रुतयः ' यतोहि रुद्रः सञ्जज्ञे तदाहि भुवनेषु ज्येष्ठं ' ' सद्योजातायवैनमः ' ' ब्रह्मणः पुत्राय ज्येष्ठाय ' ' ध्यानान्तस्स्थस्य ललाटाथचक्षः ' ' अग्रे न ब्रह्मानेशानः ' ' विश्वाधिकोरुद्रः ' ' सब्रह्मा

सदाशिवः ' ' इतोरुद्राः परामताः ' ' वसून् रुद्रा ' नित्यादिकाः । श्रीमहाभारतेच 'श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः' इत्यादि सर्वत्र द्रष्टव्यम् । सद्योजातत्वं क्रोधवेगादचिन्तितमेव जातत्वम् । तत्र रुरोदद्दुद्रावचेति रुद्रनाम निरुक्तिः । 'रोदनाद्द्रवणाच्चापि रुद्रोनाम्ने' त्युक्तः । अत्रतु रोदयति द्रावयति चेति भक्तानन्दाश्रुजनकत्व द्रावकत्वादि विशेषण विशिष्टो नारायणइति नेतर इह प्रतन्यते ।

ननु ईशान शिवशम्भुशर्व महादेवरुद्रादयः शब्दाः रुद्रदेवता विशेषसमाख्यात्वेन प्रसिद्धाः कथं भगवत्परत्वेन व्याख्यायतइतिचेद् ? न । यद्यप्यग्नीन्द्र वायुवरुणसोमादित्य वैश्वानरप्रजापति हिरण्यगर्भ शिवशंभु प्रभृतयश्शब्दा. देवतान्तरेषु समाम्नायन्ते. तथापि ब्रह्मप्रकरणाम्नाताः सर्वे शब्दा अपर्यवसानवृत्या योगवृत्यावा भगवत्येव निरुच्यन्ते । एतेषां शब्दानां प्रवृत्तिनिमित्तत्वेन यद्गुणादिक मुपपद्यते, तद्भगवत्येव अनवधिकातिशयत्वेन मुख्यमिति, इतरत्र तल्लवलेशादौपचारिकमिति वेदाचार्यैः श्रीमत्पराशरशौनकादिभिः मुनिभिः निर्णीतम् । वैष्णवे पुराणे- ' तत्रपूज्यपदार्थोक्ति परिभाषासमन्वितः । शब्दोयन्नोपचारेणत्वन्यत्र ह्युपचारत ' इति । भगवान् भाष्यकारोपि श्रीमद्रामानुज मुनिः ब्रह्मशब्दनिर्वचने तथोक्तवान् ' सर्वत्र बृहत्त्व गुणयोगेनहि ब्रह्म शब्दः, बृहत्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोस्यमुख्यार्थः, सच सर्वेश्वरएव, अतो ब्रह्मशब्द स्तत्रैव मुख्यवृत्तः, तस्मादन्यत्र तद्गुण लेशयोगादौपचारिकः ' इति । किंच । अत्र प्रकरणे मुमुक्षुणोपास्यं परंब्रह्म तद्गुणविशेषाश्च प्रतिपाद्यन्ते । मुमुक्षूपास्यं परंब्रह्म नारायण एवेति महामुनीन्द्रगुह्यं ' आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा.' इति । अन्येषां च ध्येयत्वं विनिन्दति शुभाश्रयप्रकरणे भगवान् शौनकः ' आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनित संसारवशवर्तिनः ॥ यतस्ततो

तत्पुरुषायविद्महे महादेवायधीमहि, तन्नोरुद्रः प्रचोदयात् ॥ २३ ॥

नितध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गतास्सर्वे तेहि संसारगोचराः' इति । भगवान् पराशरश्च ' अन्येतुपुरुषव्याघ्र चेतसोये व्यपाश्रयाः' अशुद्धास्तेसमस्तास्तु देवाद्याः कर्मयोनय ' इति ।

अपि च भगवच्छास्त्रे घ्वन्येषां भगवद्व्यतिरिक्तानां देवानां भवोपकरणत्वमेव प्रतिपाद्यते न मोक्षसाधनत्वं । श्रीसात्वते ' वक्ष्येभवोपकरणं गीर्वाणगणमुत्तमं । नानाविभवमूर्तीनां योवतिष्ठतशासने ॥ कालोविर्यान्नियन्ताच शास्त्रंनानांगलक्षणम् । विद्याधिपतयश्चैव सरुद्रस्सगणश्शिवः ॥ प्रजापतिसमूहश्च इन्द्रस्सपरिवारकः । मुनयस्सप्तपूर्वेन्ये गृहास्तारादिकैर्वृता ॥ जीमूताश्चाखिलानागा स्त्वप्सरोगणउत्तमः । ओषध्यश्चैवपशवो यज्ञास्सांगाखिलाश्चये ॥ विद्याचैवापराविद्या पावकश्चैवमारुतः । इन्द्रार्कौवारिवसुधे इत्युक्तमनलेक्षण ॥ चतुर्विंशतिसंख्यन्तु भवोपकरणम्महत् । भवस्साक्षात्प्रधानस्तु व्यापकोजडलक्षणः ॥ मन्त्रमन्त्रेश्वरन्यासात् सोपिपूज्यत्वमेतिचे ' ति ।

तस्मा दस्मिन्प्रकरणे शिवशम्भुरुद्रेन्द्रप्रजापतिमहादेवादयश्शब्दा नारायणेमुख्याइति सर्वैर्निश्चेयाः । तथाच सूत्रं ' वैश्वानरस्साधारणशब्दविशेषा ' दिति, ' साक्षादप्यविरोधं जैमिनि ' रितिच । तस्मादयं रुद्रमहादेवादिशब्दो नारायणपरएवेति ।

इतः पूर्वमेव सर्वशब्दप्रवृत्तिनिमित्तागुणाः प्रतिपादिताः । इतःपरं तु नारायणवासुदेवविष्णुशब्दानां प्रवृत्तिनिमित्तभूता स्वकळचेतनाचेतन व्यापनभरणसाधारण नियमनस्वाम्यादयः तद्विभूतिपर्यायाश्च प्रतिपाद्यन्ते । ( तत्पुरुषाय ) पञ्चगायत्र्यः । तस्यपूर्वोक्तस्य महापुरुषस्य पुरुषः " तत्पुरुषः " षष्ठीतत्पुरुषोयं । " विद्महे " जानीमः । " महादेवाय " तदीयाअपि महान्तः । तथा ' य

तत्पुरुषायविद्महे वक्रतुण्डायधीमहि, तन्नोद

न्तिःप्रचोदयात् ॥२४॥

तत्पुरुषायविद्महे सुवर्णपक्षायधीमहि, (५)तन्नो

गरुडःप्रचोदयात् ॥ २५ ॥

स्त्वेवंब्राह्मणोवि व तस्यदेवाअसन्वशे ' ' सर्वेस्मैदेवाबलिमावह न्ति ' ' नकर्मणावध्यतेनोकनीयान् ' ' तस्यैवात्मापदवित्तंवि दित्वानकर्मणालिप्यतेपापकेन ' इत्यादिना तदीयानां महत्वमुपपा द्यते । "महादेवाय" " धीमहि " ध्यायेम । तदीयत्वेनानुसन्द धीमहि । " तत् " तत्र तदीयत्वेनानुसन्धानेन ; " नः " अस्मान् । स " रुद्रः " " प्रचोदयात " प्रचोदयतु ।

अस्मिन्प्रकरणे पुरुषोत्तमस्य नारायणस्यैव प्राप्यत्वोपास्यत्व प्रतिपादनात ब्रह्मेन्द्ररुद्रादीनां तद्विभूतित्व प्रपञ्चनात शुभाश्रयप्र करणेषु सर्वत्र नारायणस्यैव शुभाश्रयत्वनिर्णयात अन्येषां स्वात न्त्र्याभिमानिनां तन्निषेधात् अत्रापि प्रसिद्ध तदीयभावस्य गरुडस्य तत्पुरुषायेति समाम्नानात साक्षात ध्येयस्यविष्णोर्गायत्र्यां तत्पुरुषा येत्यनाम्नानात् नारायणानुवाकादिषु नारायणस्यैव सर्वस्वामित्व स र्वमंगळाकारत्वं महाज्ञेयत्व विश्वात्मत्व विश्वशरीरत्व परब्रह्मत्वपर ज्योतिष्ट्वपरमत्व सर्वव्यापित्व सर्वाधारत्व सर्वशेषित्व प्रतिपादना च्चास्या रुद्रगायत्र्या उक्तएवार्थइति ।

प्रसिद्धतत्पुरुषभावं द्वितीयगायत्रीप्रतिपादयति । " तत्पुरुषायेति" गतं । " वक्रतुण्डः " कुटिलनासिकः । छान्दसोड कारः । दन्तोस्यास्तीति " दन्ती " भयंकरमहादन्तः । छान्दसो ह्रस्वः ।

तृतीयाभगवद्वाहनगरुडगायत्री । "तत्पुरुषायेतिगतं" " सुवर्ण पक्षाय " शोभनपतनसाधनपार्श्वाय । " गरुडः " गरुद्भि रपार दूरंडयते विहायसागच्छतीति गरुडः । गिरतिनागान्वागरुडः ।

कात्यायनाय विद्महे कन्यकुमारिधीमहि, तन्नो दुर्गिःप्रचोदयात् ॥ २६ ॥

नारायणाय विद्महे वासुदेवायधीमहि, तन्नोविष्णुःप्रचोदयात् ॥ २७ ॥

प्रतिकूलानां निगरणशीलः। गिरतेरौणादिकउडच्प्रत्ययः। [टकारश्छान्दस-?] गरुडोनाम भगवद्वाहकोवेदात्मा। यथा ' सुपर्णोसिगरुत्मा ' नित्यादि।

प्रसिद्ध तदीय भावस्य चतुर्थी गायत्री ( कात्यायनायेति ) तत्पुरुषस्वप्रसिद्धिदर्शनार्थं कात्यायनायेत्यभिहितं। कतशब्दो गर्गादिगणेपठितः। यञन्तात् तस्मात् ' यञिञोश्चे ' तिफक्। कतस्य गोत्रापत्यं वा कात्यायनः। तस्यदुर्गाभिमानित्वात् कात्यायनायेति दुर्गसामानाधिकरण्येनाभिहित। " कन्यकुमारि " कनदीप्तौ। कन्या दीपनशीला। कुमारी कात्या। ' कुमारि ' छान्दसत्वा द्विभक्तिलोपोह्रस्वत्वंच। दुर्गइति दुर्गाभिमानिनीदेवता।

पंचमीविष्णुगायत्री ( नारायणायेति ) नराणां समूहः नारं। तेषां प्रदर्शनार्थं कतिचिन्नराउक्ताः। ते सर्वे अयनं यस्यसनारायणः। तं " विद्महे " जानीमः! तदर्थं " वासुदेवाय " " धीमहि " ' सर्वत्रासौ समस्तश्च वसत्यत्रेतिवैयतः। ततस्सवासुदेवेतिविद्वाद्भिः परिपठ्यते '। तथा ' भूतेषु वसते स्सोन्तः वसत्यत्रच तानियत्। धाताविधाताजगतां वासुदेवस्ततः प्रभुः ' इति वासुदेवनिरुक्ति निरूढा। तं " धीमहि " ध्यायेम। " तन्नोविष्णुः " "प्रचोदयात"प्रचोदयतु। तत्रास्मान् विष्णुः प्रचोदयतु। 'व्याप्य सर्वानिमान् लोकान् स्थितस्सर्वत्र केशवः। ततस्सविष्णुनामादि विशे

सहस्रपरमा देवी शतमूला शतांकुरा, सर्वं हरतु मे पापं दूर्वादुस्स्वप्ननाशिनी ॥ २८ ॥

धातोः प्रवेशना ' दिति श्रीहरिदत्तः । अनयागायत्र्या उपासनस्य पुरुषोत्तमस्य अष्ट द्विषट्क षड्वर्णरूपा एतेत्रयोमन्त्राः प्रतिपादिताः । तस्मादेतैरेवस्तोत्रनुसन्धेय इति परमरहस्य माविष्कृतं ।

अथवा-एवं सर्वेषां पुरुषतादर्थ्यं प्रतिपाद्य तदेवास्नाहृदयति (नारायणायेति ) एतान् "नारायणाय" तस्यशेषभूतान् विद्महे, वासुदेवायधीमहि तन्नोविष्णुरिति पूर्ववत् ' इयं विष्णुगायत्री सकलसंसारिणां मातेवाहितकारिणी तस्मा देतदर्थानार्थानुसन्धानादिषु यतितव्यम् । अस्य माहात्म्यं कौर्मे उपरिभागे ' योजपे द्वैष्णवं सूक्तं गायत्रीं चैव वैष्णवीं । तस्य नैवद्यास्सर्वे पुरुषार्था महात्मन ' इति । अस्मिन्ननुवाके पूर्वोक्तास्सर्वे मन्त्राभगवत्समाराधने विनियुक्ताः । समाराधनांगत्वेन स्नान विधीयते । तथा च दक्षस्मृतौ ' उपर्युपरिस्नानं सन्ध्यायां मुदितेपिवा । प्राजापत्येन तत्तुल्यं महापातकनाशन ' मिति । जयाख्यसंहितायां ' तस्मादेकतमं कार्यं स्नानं शुद्धांबरेणतु । स्नानपूर्वाः क्रियास्सर्वा यत्र सम्यक् फलप्रदा ' इति ।

इतःपरं स्नानार्थमन्त्रा आम्नायन्ते । तत्रस्नानमंगलार्थं शिरसा दूर्वान्धारयेत् ( सहस्रपरमेति ) एषानुष्टुप् । " सहस्रपरमा " सहस्रादारभ्याधिका फलप्रदाने । " देवी " द्योतमाना । " शतमूलाशतांकुरा " अनेकमूलांकुरा । एवं भूता । "दूर्वादुस्स्वप्ननाशिनी" दुस्स्वप्नफलच्छेदिनी । सा, भगवत्प्राप्ति विरोधि "मेपापं सर्वंहरतु" अपहरतु । सकलसुखहेतुभूतं पुण्यं तत्फलभूतां सकलसमृद्धिं च दिशत्वितियावत् ।

अश्वक्रांते रथक्रांते विष्णुक्रांते [illegible]रा, -शिरसा

धा[illegible]देवि रक्षस्व मां पदे पदे; ॥ २९

उद्धृतासि वराहेण कृष्णेन शतबाहुना, (६)

स्नानकाले मृद्ग्रहणमन्त्राः ( अश्वक्रांते ) इत्याद्याश्चत्वारः । तत्र प्रथमोऽनुष्टुप् । "हे अश्वक्रान्ते- अश्वेन व्यापकेन पुरुषोत्तमेन क्रान्ते व्याप्ते ।" हे रथक्रान्ते " 'रथेन ' रहण शीलेन जीवजातेन 'क्रान्ते ' अधिष्ठिते । अथवा रथक्रान्ते अर्जुनसारथिना कृष्णेन अधिष्ठिते । "विष्णु क्रान्ते" विष्णुनाक्रममाणेन क्रान्ते । ' विचक्रमे पृथिवीमेष एता ' मिति । यद्वा अश्वेनाशुगमनशीलेन हयग्रीवेण क्रान्ते विष्णुनावामनेन क्रान्ते विष्णुक्रान्ते । " वसुन्धरा " हे वसुन्धरे । वसुना निधीनां धार यित्रि । व्यत्ययेन प्रथमा । " शिरसा धारिता " अयमयाशिरसा ऊर्ध्वपुण्ड्र रूपेण धारिता । " देवी " देवनशीला । 'रक्षस्व मां पदे पदे ' भूतोऽर्द्धपुण्ड्रं मां 'पदेपदे' स्थाने स्थाने अभिगमनोपादानेज्या योगेषु त्वं रक्ष । तत्र विघ्नादिक मुन्मूल्य योग्यतामापाद्य पाहि । एवमूर्द्ध्वधारण स्मरन्ति वसिष्ठस्मृतौ 'स्नात्वा ललाटे तिलकं मृदा कुर्यादतन्द्रितः । पाषण्डपतितादीनां दर्शनस्यापनुत्तये' इति । तथा श्रीवामनपुराणे-'रक्षार्थमरि नाशार्थं मोक्षार्थं च महा मुने । धारयेदूर्ध्वपुण्ड्रन्तु शिरसाहर्निशं सदा ' इति । मृद्धारणविधे स्त दर्थाएते मन्त्रा मार्कण्डेयादिभिः तत्रैव विनियुक्ताः ' ऊर्ध्वपुण्ड्रम्मृदा धार्य विप्रेण ब्रह्मवादिना । उद्धृतासीति मन्त्रेण वैष्णवेन विशेषतः ' इति ।

परोष्णिक् । हे वसुन्धरे ! त्वं पूर्वं रसातलं गता भग वता यज्ञमूर्तिना " वराहेण उद्धृतासि " तस्यैव विशेषणं "कृष्णेन" 'कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः । विष्णुस्तद्भावयो गाच्च कृष्ण इत्यभिधीयते ' इति व्यासः । तथा-'सदानन्दात्मकत्वाच्च' इति ।

भूमिर्धेनुर्धरणीलोकधारिणी ॥ ३० ॥

मृत्तिकेहनमेपापं यन्मयादुष्कृतंकृतं, त्वयाहृतेनं

पापेन जीवामिशरदश्शतं ॥३१ ॥

मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं ॥३२॥

'कृष्णोवर्णश्च मे यस्मात तस्मात कृष्णोहमर्जुन ' तिवा कृष्णः । तेन । भवन्त्यस्याः सर्वेपदार्थाइति "भूमिः" "धेनुः" सर्वकामदोग्ध्री । उत्पन्ना स्सर्वे पदार्था जीवन्त्यस्यामिति " धरणी " धृङ् अवस्थाने । 'करणा धिकरणयो श्च' त्यधिकरणे ल्युट् । "लोकधारिणी"लोक्यन्त इति लोका इति अवद्ध्या तानां सर्वेषां धारयित्री । यस्मादेवं गुणगरिष्ठा, तस्मात् । त्वमेभि र्गुणै र्मामुद्धरेति भावः ।

मृत्तिकेत्यनुष्टुप् । हे " मृत्तिके " सर्वभूतसंमर्दं सहे । मया शिरसा धारितात्वं " मे पापं " " हन " नाशय । व्यत्ययेन शप् । " मया " विहिताकरण प्रतिषिद्धसेवादिभिः अनादिकालेन भगवत्प्राप्ति विरोधि " य दुष्कृत कृतं " । "त्वया" पावनया । "हृतेन" सर्वेण "पापेन" उपल क्षितः त्वद्धारणात सकलैश्व र्यैस्संगतोहं "जीवामिशरदश्शतं" जीव्यासं । भगवत्परिचर्या विनोदनेन सर्वकालं सुखं जीव्यासं । पञ्चमोऽलंकारः ।

(मृत्तिकेदेहिमइति)चतुर्थोनुष्टुप् । अस्याः पूर्वमर्धञ्च त्वयाहृतेनेनित्ये तत्कोचिदधीयते । अनुषंगेण द्वितीयमर्धञ्च पूरयन्ति केचित् । अन्येत्वन्य मर्धमेवमधीयते "यद्दैवं यच्च मानुषं ब्रह्मदत्ताविकाश्यपी"ति । " हेमृत्तिके " सर्वं सहे विश्वम्भरे वसुन्धरे क्षमे त्व " मे पुष्टिं देहि" भगवत्परिचर्यापरस्य तदुपकरणभूतां सर्वां समृद्धिं देहि । "त्वयिसर्वप्रतिष्ठितं " सर्वेषां प्राणिना मुपजीव्यं धनधान्यादिकं सर्वं त्वयि निहितमिति । "त्वयाहृतेनेति" गतं । "यद्दैवं" देवसम्बन्धि "यच्च मानुषं" मनुष्यसम्बन्धि । तत्सर्वं भोग्यजातं त्वयिस्थितं । "ब्रह्मदत्तावि " परेण ब्रह्मणा लोकहितार्थं दत्तावि ।

गन्धद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीं, ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियं ॥ ३१ ॥

हिरण्यशृङ्गंवरुणंप्रपद्ये तीर्थमेदेहियाचितः, य

गन्धद्वारामित्यपि मृद्धारणे कैश्चिद्विनियुज्यते । कैश्चित गोमयानु ल्लेपने । गोमयस्य श्रीहेतुत्वात् तद्भावनस्तूयते । गन्धद्वारामित्येषाप्यनुष्टुप् । चन्दनकर्पूर कस्तूरिकादीनि शोभनगन्धवन्तिद्रव्याणि यस्याः प्राप्तेः "द्वाराणि" उपायाः । तां । "दुराधर्षां" दुष्टैर्निषिद्धाचारैः धर्षयितु मशक्यां । तै र्दुष्प्रापामितियावत् । "ईश्वरीं सर्वभूतानां" सर्वेषां द्रुहिणद्रुमावधीनां प्राणिजातानामीश्वरीं स्वामिनीं । तथा 'अस्येशाना जगतोविष्णुपत्नी' इति । श्रीविष्णुपुराणे – 'नित्यैवैषाजगन्माता विष्णोश्श्रीरनपायनी । यथा सर्वगतोविष्णुस्तथैवेयंद्विजोत्तमे' ति । "तां "सर्वेश्वरीं "श्रियं" सर्वैराश्रयणीयां । "इह"भगवदभिगमार्थं कर्तव्ये स्नानादिकर्मणि । "उपह्वये" ममसमीपे आह्वयामि । इहगत्य मां तापत्रयाभितप्तं स्वकटाक्षामृतवर्षणेन समुज्जीवयत्वितिभावः ।

"अश्वक्रान्तेति" प्रतिपादितमाभूम्या गन्धद्वारेति प्रतिपादितया लक्ष्म्याच समेतं इन्द्रादिपरिवारसमेतं साक्षात्सर्वेश्वरं पुरुषोत्तमं सर्वदुरितशान्त्यर्थं सर्वमंगळप्राप्त्यर्थंच हिरण्यशृंगमिति द्वयेन प्रपद्यते । (हिरण्यशृंगमिति ) "वरुणं" अनाथान् दीनानशरण्याननालम्बनांश्च स्वयं रक्षणार्थं वृणोतीतिवरुणः । 'कृवृदारिभ्य उन' न्निति औणादिक उनन्प्रत्ययः । यद्वा-सर्वेषां दुरितानां वारयितारं "हिरण्यशृंगं" हितरमणीयदीप्तियुक्तं । तथा 'अथयदतः परोदिवोज्योतिर्दीप्यते' 'नारायणपरोज्योतिः' 'तस्य भासासर्वमिदं विभाति' 'यच्चन्द्रमसियच्चाग्नौ तत्तेजोविद्धिमामक'मिति । अथवा"हिरण्यशृंगं" दुष्टनिबर्हणसाधनभूत दिव्य पंचायुधसमेतं । तथा 'तमसः परमोधाता शंखचक्रगदाधरः'इति । तथाच

न्मयाभुक्तमसाधूनां पापेभ्यश्चप्रतिग्रहः, ॥ ३४ ॥
यन्मेमनसावाचा कर्मणावादुष्कृतंकृतं, तन्नइन्द्रो
वरुणोबृहस्पतिस्सविताचपुनन्तुपुनः पुनः।३५। (७)

सुमित्रानआपओषधयस्सन्तु दुर्मित्रास्तस्मैभूया
सुर्योस्मान् द्वेष्टियञ्चवयन्द्विष्मः ॥ ३६ ॥

अक्रूराघमर्षणध्याने 'चतुर्भुजमुदारांगं चक्राद्यायुधभूषण' मित्यादि। भगत्प्राप्तिविरोधि सकलपापघातार्थं उपायत्वेनाध्यवस्यामि । एवं मया याचितोवरुणस्त्वं । स्वप्रपत्तिविमुखान् संसारपाशै रावृणोतीति वरुणः । 'वरुणोवारुणोवृक्ष'इति श्रीसहस्रनामनि। "याचित" इति प्रपत्तेर्याच्नाशरीरत्व दर्शितम् । "मे" मह्य प्रपन्नाय। "तीर्थं देहि" भगवदभिगमयोग्यां शुद्धिं देहि। "यन्मयाभुक्तमसाधुनां" भगवद्विमुखतया अभोज्यान्नानां सम्बन्धियद् 'भुक्तं' अशितं । "पापेभ्यः" हीनेभ्य । एवं भगवद्विमुखेभ्यः " प्रतिग्रहः " कृतः, धनधान्यादिकं प्रतिगृहीतं ।

जन्मांतरीय दुरितनिरसनमपि प्रार्थयते(यन्मइति)पथ्याबृहती।"मे" मया "मनसा" परदुःखाभिध्यानादिना । "वाचा"पारुष्या नृतभाषणादिना "कर्मणा" अदत्तापादानादिना । "यदुष्कृत" भगवत्प्रातिकूल्यं "कृतं"आचरितं । तन्मेइन्द्रादयः " पुनःपुनः पुनन्तु " निरवशेषं शोधयंतु ।

सुमित्राइत्यादीनि विरोधिनिरसनार्थानियजूंषि।"आपः"परमपुरुषस्य शरीरभूताः। "नः" शेषभूतानामस्माकं । "सुमित्रास्सन्तु"शोभनमैत्रीकरास्सन्तु भवन्तु । तथा 'यदम्बुवैष्णवः कायः' 'यस्यापश्शरीर 'मिति । ओषधयश्च सर्वपापानां दाहिकाःपुण्यानां पोषकाः । ताश्चास्माकं यथार्थनाम्न्यो भवन्तु ।अस्मद्विरोधी यः पुरुषः वयं यस्य विरोधिनः"तस्मै दुर्मित्रा भूयासुः" अनर्थकारिण्योभवन्त्विति यावद् ।

नमोऽग्नये प्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः ॥ ३७ ॥

यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् ॥ ३८

अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् , तन्मे वरुणो राजा पाणिनाह्यवमर्शतु ॥ ३९ ॥

नमोऽग्नय इति यजुषा अन्तर्यामिणं तद्विभूतिभूतां श्चोपतिष्ठते । 'अप्सुमते' अप्सु मुद्धेन्तर्वसति तस्मै अप्सुमते । " अग्नये " तथा 'अग्निर्या गर्भं दधिरे विरूपाः' इति । 'आपो वा अग्नेरायतनं' इति । 'वारुण्यै' वरुणस्येयं वारुणी । तत्पत्नीति यावत् ।

यत्र निमज्जेत्तत्रापः प्रदक्षिणमावर्तयति ( यदपामिति यजुषा ) "अपां क्रूरं" अपां सबन्धि , यत् ' क्रूरं' हिंसकम् । दुष्टसत्त्वादिकं । ' यदमेध्यं ' यच्चमेधनानर्हं अशुद्धं वस्तु । "यदशान्त यच्चसोपद्रव पराभिचारादिभिः । अस्ति । "तत्" सर्वं अद्भ्यः । "अपगच्छतात्" विनश्यतु ।

उत्तराभिस्तिसृभि रपो मूर्ध्नि सिंचेत् । तत्रात्याशनादित्यनुष्टुप् । " अत्याशनात् " स्वधर्मकान्तिना अतिभोजनकृतात् पापात् । तथा मनुः । ' अनायुष्यमनारोग्यमस्वर्ग्यमति भोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ' ' अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्ते विचक्षणः । स भुञ्जानो नजानाति श्वगृध्रैर्जग्धि मात्मन ' इति । अथवा शास्त्रमर्यादा मतीत्या भोज्यान्न भोजनं कृतम् । तस्मात् । " अतीपानात " शास्त्रनिषिद्धाद्पेयपानात् । "उग्रात्प्रतिग्रहात् " शूद्रादि निहीनतरनिहीनतमेभ्यः स्वभावतो हेयेभ्यः प्रतिग्रहात् । "यच्च" महापातकोप पातकादिरूपं संजातम् । " वरुणो राजा " " पाणिनाह्यवमर्शतु " अपयापयतु । हिशब्दस्संभावनायाम् । अहमपापो यथाभूयासन्तथा कुर्यादिति ।

सोऽहंपापोविरजो निर्मुक्तोमुक्तकिल्बिषः, ना

कस्यपृष्ठमारुह्य गच्छेद्ब्रह्मसलोकतां ॥ ४० ॥

इमंमेगङ्गे यमुनेसरस्वति शुतुद्रिस्तोमंसचता

परुष्णिया, असिक्नियामरुद्वृधे वितस्तयार्जीकी

येशृणुह्यासुषोमया ॥ ४१ ॥

सोहमित्यनुष्टुप् । "सोहं" वरुणेन सर्वेश्वरेण सर्वपापहरेण पाणिना अवमृष्टः । अतएव "विरजः" छान्दसोलिंगव्यत्ययः । पापहेतु भूताभ्यां रजस्तमोभ्यांविगतः । "निर्मुक्तः" अतएवविमुक्तवासना रुचिप्रकृतिसम्बन्धः । "मुक्तकिल्बिषः" भगवत्प्राप्ति विरोधिभ्य स्सर्वेभ्यः पापपुण्येभ्यो विमुक्तः । एव विगतसमस्त प्रतिबन्धकः । " नाकस्य पृष्ठं " दुःखा सभिन्ननाकः तस्यपृष्ठम् । दिव्यस्थानम् । दिव्यपर्यंकादिकम् । " आरुह्य " । " गच्छेत् ब्रह्मसलोकतां " ब्रह्मणस्सर्वेश्वरस्य नारायणस्य सर्वात्मना सलोकतां गच्छेयम् । छान्दसः पुरुषव्यत्ययः । तथा 'योवेद निहितं गुहायां परमेव्योमन् , सोश्नुते सर्वान् कामान् सहब्रह्मणाविपश्चिते ' ति ।

( इमंमे ) इयं जगती । एतानि नदीनामानि । ' स्वरितात् संहितायां ' मित्येक श्रुत्यम् । " हेगंगे " भगवद्वामपादांगुष्ठ प्रसूते । अत एव सर्वपापहरे । त्वं " मे " मदीयम् । " स्तोमं " स्तोत्रम् । " शृणुहि " शृणु । ' छन्दसिवा वचन ' मिति विकल्पितत्वात् ' उतश्च प्रत्यया ' दिति लोपोनभवति । " आशृणुही " ति आकारस्य भिदासम्बन्धः । अस्मत्पार्श्वमागत्य शृणुहीतियावत् । " हेयमुने " " हेसरस्वति " " हेशुतुद्रि " " हेपरुष्णिया " " असिक्निया मरुद्वृधे वितस्तयार्जीकीये सुषोमयासह " यूयं अन्याभिस्सह । " आसचत " आगच्छत । आगत्यात्र तीर्थेसमवेताः पुनीत । अत्र श्रेयस्सांगमयित्री गंगा । पापानांशमयित्री उपरतिकारिणी यमुना । " यमउपरम " इति धातुः । औणादिक उनन् प्रत्ययः । सरः

ऋतञ्चसत्यञ्चाभीद्धात्तपसोऽध्यजायत.(८) ततोरात्रि

_तरणम् । विचित्र प्रसरणवती सरस्वती । क्वचिदुपलब्धा क्वचि
_दुपलब्धाचसरस्वतीति । ' शुतुद्रिस्तु शतद्रुस्या ' दिति द्वावेतौ
पुत्रशोकार्तेन वसिष्ठेन मरणार्थं यत्प्रवाहेप्रवेशः कृतः तस्या नद्याः
पर्यायौ । तत्राद्यः पर्याय उकारयुक्त शकारवान् ङ्कारेफयुक्त दका
रवांश्च । आशुतुदतीति शुतुद्रिः आशुप्रद्रुद्रवणा शुतुद्रिः ।
परागताष्णापरोष्णी । गौरादित्वादनयोर्ङीषिपरुष्णियष्णया । आकारेण
सहयणादेशेकृते इकारोपजनश्छान्दसः । असितवर्णा असिक्नी ।
' छन्दसिक्रमेक इच्छन्ती ' ति ङीषि क्नादेशः । इकारश्छान्दसः ।
मरुतावर्धतइति मरुद्वृधा । इगुपधलक्षणः कः । कावेरी । ' वित
स्तया सह ' उपक्षयरहितावितस्ता । आर्जिकेषु भवा आर्जीकीया ।
शोभना सोमलता यस्यास्तीरे सासुषोमा । सुषामादित्वात् षत्वम् ।

अन्तर्जलगतोघमर्षेण त्रीन्प्राणानायामान् धारयेत् । ऋतंचेत्यनु
ष्टुप् । परमकारणा ज्जगत्सृष्टिः प्रतिपाद्यते । अघानामतिशयेना
भिभवितृत्वादघमर्षण मित्युच्यते । नित्येस्नानेस्य विनियोगः ।
' सममश्वमेधावभृथेन ' इत्यादिस्मृतेः प्रायश्चित्ततया च विनियु
ज्यते । तथा च मनुः ' यथाश्वमेधः क्रतूनां सर्वपापप्रणाशनः ।
तथाघमर्षणं स्नानं सर्वपापप्रणोदन ' मिति । उक्त महा माहिम्नः
परस्मात् ब्रह्मणः परमात्मनः " अभीद्धात् " ' बहुस्यां प्रजायेये '
त्यादि संकल्प ज्ञानोद्दीप्तात् । पुनश्च कीदृशादित्यपेक्षायां " तपसः "
यस्यज्ञानमयन्तप ' इति तत्तत्पदार्थस्वरूपलक्षणज्ञानवतः । " ऋतंच
सत्यंच अध्यजायत " ऋतमित्यतें र्गतिकर्मणः कर्तरिक्तः । पूर्वा
वस्थां विहायावस्थान्तरं गच्छतीति ' ऋतम् ' । सर्वजगत्कारणभूतं
प्रधानाद्यपरपर्यायं चेतनसमष्टिभूतं तत्वम् । ' सत्यं ' स्वतेजः विकार
दूरीभूत जगत्कारणभूतं पुरुषसमष्टि भूतं । तदुभयमध्यजायत । पूर्वाव
स्थाया आदौ महदहंकार तन्मात्र विकाररूपेणा विरभवत । च शब्द
स्सूज्यत्वेन वर्तमानानि समुच्चिनोति । ( ततोरात्रिरजायत ) " ततः "

रजायत ततस्समुद्रोअर्णवः ॥४२॥

समुद्रादर्णवादधिसंवत्सरोऽजायत, अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ ४३ ॥

सूर्याचन्द्रमसौधाता यथापूर्वमकल्पयत् ,

परिणामक्रमेण रात्रिवद्रात्रि रित्यचित् परिणामरूपाणि महदादीन्यजायन्त । तमोगुणत्वादात्मगुणानां प्रकाशानां तिरोधायकत्वात् 'रात्रि' शब्देन प्रकृतिविकारा उच्यन्ते । अहोरात्रादि परिच्छेदकारिणो स्सूर्याचन्द्रमसो स्सृष्टि रुत्तरत्र वक्ष्यमाणत्वा त्र सुषुप्तारात्रि रत्रोच्यते । ( ततस्समुद्रोर्णवोजायत ) ततः अर्णः परिणामात् " समुद्रः " समुद्रवत्यस्मादण्डमिति समुद्रशब्देनाप उच्यन्ते । तथा 'अप एव ससर्जादौ तासुवीर्यमवासृजत' इति । समुद्रवतीति समुद्रः । अपामेवोद्रेकः कथ्यते । अथवा समुन्दति सम्यगार्द्रीकरोति वेलाविक्रमंकृत्वा कदाचिद्भूभागमिति समुद्रः । 'उन्दीक्लेदन' इति धातुः । अर्णश्शब्देन जलमुच्यते । ऋच्छति गच्छतीत्यर्णः । 'ऋगतौ' विति धातोरसुन्प्रत्ययेर्ण उदकम् । तत् भूतमस्योस्तीत्यर्णवः । 'अर्णसोलोपश्चे' ति मत्वर्थेवप्रत्ययः । सकारलोपश्च ।

( समुद्रादर्णवादधिसंवत्सरो अजायत ) ताभ्य उद्भूताभ्योद्भ्यः । " संवत्सरः " हिरण्य गर्भाख्यः पितामहः । " अजायत " तज्जलगर्भभूतादण्डा च्चतुर्मुखोजायत । तथामनुः 'तदण्डमभवद्धैमं सहस्रांशु समप्रभम् । तस्मिन् जज्ञे स्वयंब्रह्मा सर्वलोकपितामह' इति । ततस्सपरमात्मा । " अहोरात्राणि विदधत् " अहोरात्रजीविनः सर्वान् प्राणिनो विदधत् । तत्तत्कर्मानुरूपेण नानायोनिषु नियच्छन् । पुनरपिसएव विशेष्यते । " विश्वस्य मिषतोवशी " स्वसृष्टस्य भुवजातस्य " मिषतः " चेतनवर्गस्य " वशी " नियन्ता ।

दिनकरादीनामसृष्टत्वात् कथं विश्वस्यमिषतोवशी? तत्राह(सूर्याचन्द्रमसावित्यादि ) सूर्याचन्द्रमश्शब्दः सर्वेषामिन्द्रवरुणादीनां देवानामुपलक्ष

दिवंचपृथिवींचांतरिक्षमथोसुवः ॥४४॥

णार्थः। "धाता" विधातासर्वेश्वरः। "यथापूर्वमकल्पयत" पूर्वपूर्वकल्पेषु तेसूर्यादय. यत् स्वरूपा यत् गुणा यद विभूतिकाः कल्पमाः, तथा अकल्पयत। तथा च मनुः-" यथर्तुष्वृतु लिंगानि नानारूपाणि पर्यये। दृश्यन्ते तानितान्येव तथाभावा युगादिषु ' इति। तथा ' नामरूपंचभूतानां कृत्यानांचप्रपंचनम्। वेदशब्देभ्यएवादौ पृथक् संस्थाश्च निर्ममे ' इति। स्वसृष्टानां प्राणिनां भोगस्थानानि चाकल्पयदित्याह ( दिवंचपृथिवींचेति ) " दिवं " नाकं। ज्योतिष्टोमादिकर्मणां फलभूतं दुःखासंभिन्नं सुखप्रचुरं स्वर्गमकल्पयत। ' पृथिवीं ' मनुष्याणां वर्णाश्रम विभक्तानां तिरश्चां च भोगस्थानं सुखदुख मिश्र मकल्पयदिति। " अन्तरिक्षं " वयोविद्याधर गन्धर्वादीनां विहारस्थानं मध्यमन्तरिक्षं लोक मकल्पयत। "अथो सुवः" एतेभ्य उपरिष्टा न्महरादिकान् कल्पवासिनां भोगायतनानुपरि लोकानकल्पयत। एवं सर्वाणि भूतजातानि सर्वान् लोकांश्च कल्पयन् स परमात्मा मां शुद्धस्वभावं स्वसंकल्पमात्रेण कुर्यादित्यर्थः।

एतदघमर्षणसूक्तं परमैकान्तिनस्त्रैविद्यवृद्धा एव व्याचक्षते। ( ऋतंचसत्यंचेत्यादि ) पूर्वप्रकृतादुक्तमहिम्नः परमात्मनोवासुदेवात परिपूर्णषाड्गुण्यात् " अभीद्धात " प्रळयावस्थावस्थितं शोच्यदशापन्नं जगदालोक्य कारुण्य वात्सल्यसौहार्दादि स्वासाधारण दिव्यगुणैर्यथा पुरमेतत्सकलमुत्पाद्यरमेयेति स्वसंकल्पेन समिद्धात्तस्मात। तपस्संज्ञको ज्ञानात्मासंकर्षणः प्रादुरासीत्। तथा " ज्ञानात्माभगवान् संकर्षण " इति। तस्मात्तपश्शब्दवाच्यात संकर्षणात्सत्यं सत्याभिख्यः प्रसिद्धैश्वर्यवीर्यगुणः प्रद्युम्नो जायत - आविरभूत। तस्मात प्रद्युम्नात् ऋतशब्दवाच्यो जगत्स्रष्टानिरुद्धो जायत। तथा अनिरुद्धाभिख्यस्य " ऋतजाअद्रिजारतं बृह्म" दिति ऋतेर्गतिकर्मणोनिष्ठायां ऋतमिति रूपंभवति। सिसृक्षायां जगदभिमुखं ऋच्छतीति यावत।

## यत्पृथिव्यांरजस्स्वमांतारिक्षेविरोदसी, इमाँस्तदा

" अद्भ्य ज.यत " अधिशब्देन क्रमोविवक्ष्यते । ऋतंचसत्यंचाभी द्धात्तपसोद्ध्यजायतेत्यनेन खण्डेन जगत्सिसृक्षायां चतुष्प्रकारादिव्य शास्त्रोदिताव्यूहाख्या सात्विकसृष्टिरुक्ता । तथा च मूलसंहितायां प्रतिपादितम् । " ततोरात्रिरजायत " रात्रिवत् रात्रिरिति रात्रिशब्देन प्रकृतिरुच्यते । तमोगुणत्वाद्वा । गुणानां आच्छादिकाप्रकृतिरजा यतेति । ततस्समुद्रधन्त्यस्मा दहंकारादीनीति समुद्रशब्देन महदादय उच्यन्ते। समुद्रः-अर्णवः तस्मान्महदहंकारादिरूपेण विकृतादर्णवः जळंप्रादुरभूत । "समुद्रादर्णवादधि संवत्सरो अजायत " समुद्राद र्णवात्प्रळयावस्थावास्थित जळधेस्संवत्सरोजायताधिकारि पुरुषस्संवत्सरः प्रजापति स्संजज्ञे । तथा " संवत्सरः प्रजापति " रिति । पुनरपि " मिषतोविश्वस्य " चेतना चेतनात्मकस्य सर्वस्य " वशी " स्वामी अनिरुद्धः " अहोरात्राणि विदधत् " अहोरात्र विधानार्थम् । हेतौ शतृ प्रत्ययः । " सूर्याचन्द्रमसौ धातायथापूर्वमकल्पयत् " पूर्ववत् कल्पितवान्। सविधातासर्वविधाता अनिरुद्धः " दिवञ्चपृथिवींचान्त रिक्षमथोसुव. " रिति ।

यत्पृथिव्यामित्यादिभि स्त्रिसृभिरघमर्षणोत्तरकाळं स्नायात् । तत्र प्रथमद्वितीये अनुष्टुभौ । तृतीया शंकुमती । पंचपदसमा । चतुरक्षराः सर्वेपादाः । प्रथमः पंचाक्षरः । तेनेयं शंकुमती । यथाहुः "एकस्मिन् पंचकेसर्वं छन्दश्शंकुमती" ति । तृतीयोपि पादश्चतुरक्षरः । स्वरितैकाक्षरम्पदम् । छान्दसत्वात द्व्यक्षरंपद मधीतम् । नवदा द्रियन्ते अक्षरसंख्याने । " पृथिव्यां " वर्तमानैरस्माभिः । " यद्रजः " पापम् । भगवदपचार भागवतापचाररूपं कृतम् । अस्माभि रनुष्ठितत्वात् "स्वं" आत्मीयं च । " आन्तरिक्षे " अन्तरिक्षवा सिभ्यो यत्पापमागतः । " विरोदसी " रोदस्योः द्यावापृथिव्योः यत्पापम् । " विगतं " विविधमागतम् । रोदसी इत्यत्र सप्तम्याः 'सुपांसुलुक्' इति लुक् । "तत" तस्मात् पाप्मानः । अत्रापि पंचम्या।

पोवरुणःपुनात्वघमर्षणः ॥ ४५ ॥

एषभूतस्यभव्येभुवनस्यगोप्ता, एषपुण्यकृतांलोका नेषमृत्योर्हिरण्मयम् ॥ ४६ ॥

द्यावापृथिव्यो हिरण्मय॰संश्रित॰सुवः। सनस्सुव स्संशिशाधि ॥ ४७ ॥ (९)

स्तथैवलुक् । "इमान्" अस्मान् पापाचरणोद्युक्तान् । "आपः" जलानि तासां राजा "वरुणः" अस्यापि राजा "अघमर्षणः" अघानां अभिभविता पुरुषोत्तमश्च । "पुनातु" शोधयतु । "क्षितीशः पापनाशन" इति ।

भगवतैव पापसंशोधने हेतुमाह (एषभूतस्येति) "एषः" अघमर्षणः पुरुषोत्तमः । "भूतस्यभव्ये" देवतिर्यङ्मनुष्यस्थावरात्मकस्य "भव्ये" नित्ये परमेपदे । परंपदं । व्यत्ययेन सप्तमी । "भुवनस्य गोप्ता" भुवनानां लोकानां गुप्तचर्थम् । हेतौतृच् । तत्र संश्रितः । सदासन्निहितो वर्तते । तथा । "एषपुण्यकृतां लोकान्" पुण्य कृतां धार्मिकाणां लोकान् स्वर्गादीन् उपरिलोकान् । तद्रक्षणार्थ माश्रित इति शेषः । "एषमृत्योर्हिरण्मयं" मृत्योर्मरणहेतुभूतस्य वैवस्वतस्य । "हिरण्मयं" हितरमणीयं लोकं तद्वासिनां गुप्तचर्थं संश्रित इत्यर्थः । तदस्माकं यत्पापं सएव तत सर्वं पापं शोधयति नान्यइति भावः ।

एतदेवप्रपंचयति (द्यावापृथिव्योरिति) एष पुरुषोत्तमः "द्यावा पृथिव्योः" अधोलोक द्योर्लोकयोः, "हिरण्मयं संश्रितं सुवः" हिर ण्मयः संश्रितः । व्यत्ययेन द्वितीया । हितरमणीयः "सुवः" सुखरूपः संश्रितोभवति । य एवं सर्वरक्षणार्थं सर्वसन्निहितोभवति । हे पुरु षोत्तम "सः" त्वं "नः" अस्मान् । भवत्परिचारकान् "सुवः" सुखरूपोभूत्वा । "संशि शाधि" संशोधय । अस्मान् पापानुरूप

आर्द्रंज्वलतिज्योतिरहमस्मि, ज्योतिर्ज्वलतिब्र
ह्माहमस्मि, योहमस्मिब्रह्मा ऽमस्मि, अहमेवाहं
मां जुहोमिस्वाहा ॥ ४८ ॥

संशितव्रतान् अपापान् कुर्वित्यर्थः । 'संशिशाधि' इपते लोटि छान्दसोधिभावः । अथवा 'संशिशाधि' मंगळाचरणे स्वस्मान् शाधि । तदा शास्वेरूपम् । छान्दसत्वा दभ्यासेकारो ।

अथ आर्द्रमिति यजुषाप आचामति । "आर्द्रं" शीतळमाह्लाद करं यत । "ज्योतिर्ज्वलति" स्वरूपेण सम्भूतेन प्रकाशेन । स्व धर्मभूतेन ज्ञानेन सर्वं जानातीति । तत "ज्योतिरेवाहं अस्मि" । अन्यशरीरे प्रियादिकं यत् ब्रह्म स्वरूपेण धर्मभूत ज्ञानेनकरतळामळक वत सर्वं सर्वज्ञत्वात् पश्यति । तत "ब्रह्माहमस्मि" तच्छरीरत्वेन शेषभूतोस्मीत्यनुसन्दधामीति । तथैव श्रुत्यन्तरं "त्वंवा अहमस्मि- भगवोदेवते अहं वैत्वमसि भगवोदेवत" इति । एतदुदाहृत्य सूत्र कारेण सिद्धान्तितं "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे" ति । सूत्रार्थः - किमुपास्यं ब्रह्म उपासितु रात्मत्वेनान्यत्वेनानुसन्धेयम् , उत अनन्यत्वेनेति संशयः । "अधिकन्तु भेद निर्देशा" दित्यादिषु उपासितु रुपास्यस्यान्तरत्वोपपादानादन्यत्वेन उपास्यमिति पूर्वः पक्षः । राद्धान्तस्तु "त्वंवा अहमस्मि भगवोदेवते अहं वैत्वमसी" ति पूर्वं उपासितारः उपास्य मात्मत्वेनोपगच्छन्ति, अतआत्मत्वेनोपास्य मुपा सकानां जीवानां उपासितुरात्मत्वं ग्राहयन्ति शास्त्राणि "यआत्मनि तिष्ठन्" "यस्यात्माशरीर" मिति । उपासितापरामात्मनः शरीरं, परमात्मा च उपासितु रात्मेति प्रतिपादनेन । तथा "सर्वं खल्विदं ब्रह्म तज्जलानिति" "सन्मूलास्सोम्येमास्सर्वाः प्रजाः स दायतना स्सत्प्रतिष्ठाः" "ऐतदात्म्यमिदंसर्वं तत्सत्यं सआत्मातत्व मसी" तिच तदायत्तस्वरूपस्थिति प्रवृत्तिता प्रतिपादनेन च एव

अकार्यं कार्यवकीर्णस्तेनोभ्रूणहा गुरुतल्पगः,

साक्षितु रात्मनोऽप्यात्मत्वेन ब्रह्मणो यथावस्थित स्वात्मशरीरक ब्रह्मा नुसन्धाने "अह" मित्येवानुसन्धेयम् । यथा मनुष्यो हमस्मीति शरीरस्य स्वप्रकारतैक स्वभावतया प्रकारिणि स्वात्मनिपर्यवसानं तथा स्वात्मनो हं प्रत्ययोहं शब्दश्च न केवलं स्वात्मविषयः, परमात्म शरीरतया तद्विशेषणत्वेनैव स्वात्मनोवस्थाना दुपासकोप्युपास्यं परं ब्रह्मात्मत्वेनोपास्ते । तथा "यादयन्ति च" श्रुतयः "य आत्मनि तिष्ठ" न्नित्याद्याः । "योहमस्मि" पूर्वोक्तादन्योवपुरादिष्वपि योपिकोप्यहमस्मि । "सोहं" "ब्रह्म" ब्रह्मात्मकोहमस्मीत्यनुसन्द धामि । तथा च श्रुत्यन्तरं "योहमास्मि सछन् यजे" "यस्यास्मि नतमन्तरेमि" "स्वम्मइष्ट" मित्यादि । "अहमेवाहं" शरीरादि व्यतिरिक्तो ज्ञानस्वरूपो हम् । "मां" "जुहोमि" परस्मिन् ब्रह्माणि नारायणे प्रक्षिपामि । "स्वाहा" सुहुतामाहुति मिव प्रक्षिप्य स्वरूपाभिनिष्पत्या कृतार्थोभवामि । तथा "इदमह माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा" इति । दक्षस्मृतौ "बहिर्मुखानि सर्वाणि कृत्वाचान्तर्मुखानिवै । मनसैवेन्द्रियग्रामं मनश्चात्मनियोजयेत्" "सर्वो पाधि विनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणिन्यसेत् । एतत ज्ञानंच ज्ञेयंच शेषोन्योग्रन्थ विस्तरः" इति । अनेन मन्त्रेणा चमनव्याजेन मुखेजलं क्षिपन् आत्मानं ब्रह्म ब्रह्माणि प्रक्षिपेदिति परमशुद्धिकारणं आत्मयोगरूपं पुरुषसूक्तादि प्रसिद्ध मत्र परिचरणार्थं स्नातस्य परमशुद्ध्यर्थम् मानसं स्नान ।

(अकार्यकारीति) पुरस्तात् वृहत्या रहस्यप्रायश्चित्तार्थं स्नायात । स्तेनान्तः प्रथमपादः । "अकार्यकारी" "नहिंस्यात्सर्वा भुतानी" त्यादि प्रतिषिद्धाचारानुष्ठाता । "अवकिर्णी" ब्रह्मचर्यादि व्रतभंगकृत । "स्तेनः" ब्राह्मणस्वर्णादिचौर्यपरः । "भ्रूणहा" वेदविद्ग्रेसर ब्राह्मणहन्ता । "गुरुतल्पगः" गुरुभार्यागामी । सर्वे

वरुणोपामघमर्षण स्तस्मात्पापात्प्रमुच्यते ॥ ४९ ॥

रजोभूमिस्त्वमाँरोदयस्वप्रवदन्तिधीराः, पुनंतु ऋषयः पुनंतुवसवः पुनातुवरुणः पुनात्वघमर्षणः ५०।

आक्रान्थ्समुद्रः प्रथमेविधर्म ञ्जनयन्प्रजाभुव

च्येते । "तस्मात्पापात्प्रमुच्यते" अनेन मन्त्रेणदहनात्पापानाम् । तत्र हेतुमाह ( वरुण इति ) एतन्मन्त्र प्रतिपाद्यः । "अपां स्वामी । "वरुणः" तदात्मभूतः । "अघमर्षणः" पापानामभि भविता । सपुरुषोत्तमः अनादौ काळ एवंविध महापातकाति प्रसंगिनं मां सर्वस्मात पापात् प्रमोचयत्वित्यर्थः ।

( रजोभूमिरिति ) मध्ये ज्योतिर्जगती । पङ्क्तिर्वा । एषापि स्नानमन्त्रेष्वधीतत्वात् स्नानेविनियोज्या । "रजोभूमिः" इयंकर्मभूमिः । सा"तु" । "अमां" मदन्यम् । अनेन स्नानमन्त्रेण स्नानमनाचरन्तं । अहन्तु स्नानकृत् । "रोदयस्व" रोदयतु । दुःखयतु । पुरुष व्यत्ययश्छान्दसः । तुशब्दः पुण्यफळभूमिं व्यावर्तयति । पुण्यफळ भूमिर्मांमोदयतु रजोभूमिस्त्वियं मद्व्यतिरिक्तं रोदयत्विति भावः । अमामिति प्रतिषेधार्थकस्या कारकस्य "सुप्सुपे" ति समासः । "प्रवदन्ति धीराः" एवं "धीराः" धीमन्तः कथयन्ति । अघमर्षण स्नायिनं विहाय अन्यं रजोभूमिः दुःखयत्वित्यधीतत्वात अघमर्षणेनैव स्नानं कर्तव्यं इति धीराः कथयन्तीत्यर्थः । किंच । ( पुनन्तु ऋषय इत्यादि ) अघमर्षणेन पूयमानं मां एते ऋष्यादयः अनुजानन्तु । तथा शोधयन्त्वित्यर्थः । एतेषामन्तरात्मा "अघमर्षणश्च" ।

( आक्रानिति ) अर्चने जपेवाविनियुज्यते । एतदाद्या आन्तिम नुवाकस्य सर्वेत्रिष्टुभः । अनेन परमपदस्यैश्वर्यं प्रतिपाद्यते । पूर्वं प्रस्तुतोयं पुरुषोत्तमः "समुद्रः" समुद्रवत्युत्पद्यते स्माद्विश्वमिति समुद्रः । पृषोदरादित्वाद्रूपसिद्धिः । सर्वकारण मित्यर्थः । "भुवनस्य"

नस्यराजा(१०)वृषापवित्रेअधिसानोअव्यें. बृहत्सो

मोवावृधेसुवानइंदुः ॥ ५१ ॥

जातवेदसेसुनवामसोम मरातीयतोनिदहातिवेदः ,

भूतजातस्य । " राजा " रंजयिता । स्वामीति यावत् । ' वृषः " कामानां वर्षिता । " बृहत् " ब्रह्म । " सोमः " सर्वाप्यायकः । " इन्दुः " परमैश्वर्यवान् । " सुवानः " स्वैश्वर्यस्य प्रसविता । एवं भूतः पुरुषोत्तमः । " प्रथमे " आद्ये । प्रथित स्वरूपस्वभावे । " विधर्मन् " स्वासाधारण विलक्षणनित्यादिव्यधर्मोपेते । ' पवित्रे" स्मर्तॄणां पावने । प्रसिद्ध प्रदेशे । " अधि " सर्वस्मादुपरिस्थित । " अव्ये " अवनस्वभावे । अवतेः क्विप् । ऊठ् । " तत्रसाधु " रिति यत् । गुणेऽवादेशेचकृते अव्यइति रूपंभवति । " सानो " उन्नते देशे । वर्णव्यत्ययेन छान्दसओकारः । एवम्भूतेपरमेव्योम्नि अधि ष्ठातृत्वेन वर्तमानः । " आक्रान् " देवतिर्यङ्मनुष्य स्थावरादिलोको पकरणभूतं सर्वं जगदाक्रान् वशकुर्वन् । क्रमेः क्विप् । " अनुना सिकस्य क्विझलो " रिति दीर्घं " मोनोधातो " रिति नत्वम् । " प्रजाः " प्रज्ञानादिभिः पुष्टजन्मनः । तत्रस्थान् सूरीन् । " जन यन् " एतान् स्वगुणाविष्कारेणो जीवयन् । " वावृधे " एवं सर्व निर्वहणेन भृशंवर्तते । बृहदिति वृद्धिविशेषणम् । एवं तदैश्वर्या दिकं अनुसन्दध्यादिति भावः ।

चोरव्याघ्रपिशाचादि भये दौर्गत्येच जपहोमादिकं जातवेदस इत्यादिभिः कुर्यात । एतेच प्रकरणात् परमात्मनि व्याख्येयाः । " जातवेदसे " " जातं " सर्वदानिष्पन्नम् । हेतुनाऽनिष्पाद्यं । " वेदः " ज्ञान धनं वा । यस्यसः । अथवा जातानां, असद्वया वृत्तानां सर्वेषां प्राणिनाम् । ' वदिता " जातवेदाः । वेत्तरसुन्न

सनःपर्षदतिदुर्गाणि विश्वानावेवसिंधुंदुरितात्यग्निः॥

ताम्ग्निवर्णां तपसाज्वलंतीं वैरोचनींकर्मफलेषु जुष्टां, दुर्गादेवींशरणमहं प्रपद्येसुतरसितरसेनमः॥

त्यथः । तस्मै सर्वज्ञाय सर्वेश्वराय पुरुषोत्तमाय । "सोमं" "सुनवाम" तदाराधनार्थं अभिषुत सोमाद्युपकरणाभ्स्याम । तस्य सर्वेश्वरस्य, "वेदः" प्रकृष्टं नित्यज्ञानादिकं । "अरातीयतः" शत्रुत्वमिच्छतः जनान् । "निदहाति" नितरान्दहतु । लेटआडागमः । किंच- "सः" पुरुषोत्तमः । "नः" अस्मात् । तत्परिचरणैक स्वभावान् । "पर्षत" पालयतु । पृणातेर्लेटिसिप् । "अतिदुर्गाणि विश्वा" दुरतिक्रमाणि । दुरितानि - संसाररूपाणि नरकादीनि स्थानानि । "अति" अतीत्य, अतिक्रम्य । पालयतु । दुर्गादितरण प्रकारे निदर्शनं "नावेवसिन्धुं" नावासिन्धुमतीत्य स्थितानिवास्मान् पालयतु । "अत्यग्निः" सर्वमतीत्य वर्तमानः अग्रेनेता पुरुषोत्तमः । तथा "तथावाख्विन्द्र कर्माणं अतिसूर्योग्नि तेजसं । अतिबुद्धि प्रियात्मान" मिति । एतदुक्तं भवति । अस्मत्समाराधन सम्प्रीतो भगवान् अस्माकं नाशयित्वा विषयसम्पन्नपापाविद्या प्रकृतिसम्बन्धादीन् विनाश्य संसारादुत्तार्य स्वचरणारविन्दं प्रापय्य सुखयत्विति ।

तामेव परदेवतां शरण मुपगच्छति । "तां" सर्व प्राणि प्राणन हेतु भूताम् । अतएव सर्वेषां बुद्धौ स्थिताम् । "अग्नि वर्णां" दिव्यज्योतिर्मयविग्रहाम् । "तपसा" स्वासाधारणेन प्रकृष्टज्ञानेन "ज्वलन्तीं" दीप्यमानाम् । "वैरोचनीं" विरोचनं आदित्येवसन्तीं । आदित्यान्तरवस्थिता मित्यर्थः । "कर्मफलेषु जुष्टां" कर्मसुतत्फलेषुच समाराध्यत्वेन तत्फलदानाय जुष्टाम् । कर्मफलार्थ सेवितव्यां वा । तत्र सहितामिति यावत् । "दुर्गां" अभक्ते

अग्नेत्वंपारयानव्यो अस्मान्स्वस्तिभिरतिदुर्गाणिविश्वा, पूश्चपृथ्वीबहुलानउर्वी भवातोकायतनयायशंयोः ॥ ५४ ॥

दुर्गमाम् । "देवीं" देवनवतीम् । "अहं" अनन्यसाधनः । "शरणंप्रपद्ये" उपायत्वेनाध्यवस्यामि । हेदेवते । "तरसे" तरण शीले । "सुतरसि" संसारगर्तात् सुष्ठुतारयसि । अन्तर्भावितण्यर्थोयं । अस्यैतुभ्यमहम् । "नमः" नमेहमित्यर्थः ।

एवं परमकारणं पुरुषोत्तमं प्रपद्य स्वापेक्षित मभ्यर्थयते (अग्ने त्वमिति) "हेअग्ने" अग्रनेतः पुरुषोत्तम । "त्वं" "नव्यः" नित्ययुवा । अकाळकाल्यस्वरूप विभवादिमत्वा दाश्रितेभ्यस्सर्वकाळ सर्वापेक्षित फलप्रदइति भावः । नव एव नव्यः । स्वार्थिको यत्प्रत्ययः । "अस्मान्" त्वत्समाश्रयणैक विनोदनात् । "स्वस्तिभिः" दुर्गातिक्रमोपायभूतैः कल्याणप्रापकैश्च भवत्प्रसादैः । असगतौ । सुपूर्वात् "क्तिच् क्तौचसञ्ज्ञाया" मिति क्तिच् । "अतिदुर्गाणि विश्वा" विश्वानि दुर्गाणि अतिक्रम्य । दुःखेनगति र्येषुतानि दुर्गाणि, विरिञ्चि शतमखाद्यैश्वर्यरूपाणि अतिक्रमय्य । "पारय" पारंप्रापय । संसाराध्वनः पारं परमपदं प्रापयेत्यर्थः । पारशब्दात्तत्करोतीति णिच् । "पूश्चपृथ्वी बहुळान उर्वी" 'नः' अस्माकम् । 'पूः' अयोध्या पराजितेत्यपरपर्याया । 'पृथ्वी' महावाकाशा । 'बहुळा' अनन्तधान्यधन पशुपुत्रादिमती । विध्मादिलक्षणोळच् । 'भव' शेषभूता भवत्वित्यर्थः । 'उर्वी' उरुतरा । सर्वकामदोग्ध्री । उर्वी च स्वभूताभवतु । "तोकायतनयायशंयोः" तोकाय अपत्याय । "तनयाय" तस्य पुत्राय । अस्मच्छिष्यप्रशिष्याणा मित्यर्थः । उभयत्र षष्ठ्यर्थे चतुर्थी । 'शं' शमयिता । त्वत्प्राप्तिविरुद्धानामविद्याकर्मवास

विश्वानिनोदुर्गहा जातवेद स्सिंधुंनना‌वादुरि-।
तिपर्षि, अग्नेअत्रिव न्मनसागृणानो स्माकंबोध्य
वितातनूनां ॥ ५५ ॥

पृतनाजितँ सहमानमग्नि मुग्रँहुवेम परमाथ्सध

नाडुचिप्रभृतीनां शमयिताभव । " योः " मिश्रयिता । स्वप्राप्ति हेतु भूतानां ज्ञानभक्तिप्रपत्त्यादीनां मिश्रयिताभव । शमेर्ण्यंताद् क्विपि मितां ह्रस्वे णिलोपे च शमितिरूप । " युमिश्रणे " अस्माद्विचिप्रथ मैकवचने " यो " रिति रूपम् । ✓

साधनविधुराणां दुर्बलानां त्वमेव रक्षक इत्याह ( विश्वानीति ) हे " जातवेदः " करतलामलकवत् विश्वालोकक अग्ने । यथा ज्ञानमुनारण सामर्थ्यवन् । " तनूनां ।" अल्पीयसाम् । प्राप्तिसाधनविधुराणाम् । " नः " अस्माकम् । " अविता " रक्षणैकशीलः । निरालम्बनानामालम्बनभूत इत्यर्थः । तेषां " दुर्गहा " दुर्गहन्ता । एवंभूतः । " सिन्धुंननावा " सिन्धुंनावेव ।अस्मत्स म्बन्धीनि । " विश्वानि " " दुरिता " सर्वाणि ऐश्वर्यकैवल्यादीनि । " अति " अतिक्रम्यपरिपालय । अस्माभिः " अत्रिवता मनसा " " गृणानः " त्रिस्तवन्ति सात्वरज स्तमांसि । तत्फलभूतानि त्रिव र्गाणि । तत्प्रतिभटेन मनसा । ' गृणानः ' गीयमाणः । तत्रा स्माकम् । " बोधि " उद्बुध्यस्व । अस्मदर्थं मवहितमना भवेति ।

अस्मदुत्तरणार्थं परमपदादिहागच्छेत्याह्वयति । " पृतनाजितं " अस्मत्प्रतिभटभूतानां अनादिकालसंचितानां पापसंघानां जेतारमुन्मूल यितारम् । " सहमानं " सहनशीलम् । ज्ञानोत्तरकालभाविनोस्म दपराधान् सहमानम् ।-" अग्निं " एवं पापं संशमय्य उत्तारयितारम् ।

स्थात्(११)सनः पर्षदतिदुर्गाणिविश्वाक्षामं देवोअति दुरितात्याग्निः ॥

प्रत्नोषिकमीड्यो अध्वरेषु सनाच्चहोतानव्यश्च सत्सि, स्वांचाग्नेतनुवंपिप्रियस्वास्मभ्यञ्चसौभगमा यजस्व ॥ ५७ ॥ (*११]

"उग्रं" उद्गूर्ण । सततं उद्युञ्जानम् । "हुवेम" आह्वयेम । आर्ति प्रकाशकेन वचसा प्रार्थयाम । कुतइत्यपेक्षयाम् । "परमात् सधस्थात्" रजसः परस्तात् परमव्योम्नः । सहानुभयस्थानं सधस्थम् । "सधमादस्थयो" रिति सधादेशः । "अति" स्वयं देव प्रतिभट त्वात् दुर्गादिक मतीत्य वर्तमानः । सदेवः पुरुषोत्तमः । "विश्वानि दुर्गाणि" विश्वानि दुरितानि दुःखानि । "क्षामत्" क्षयशीलंवस्तु । स्वर्गादिकं सर्वमातिक्रमय्य नः स्वसामर्थ्येन रक्षणैकस्वभावं परमोदारंस्व प्राह्वायकानस्मान् । "पर्षत्" पालयतिःत्यर्थः । "क्षामत्" "क्षैक्षये" । क्विबन्तान्मतुप् ।

प्रत्नोषीत्यनेनापि भगवत्प्रीणनं कुर्यात् । हे "अग्ने" अग्रणीः । "अध्वरेषु" यागेषु । "कं" सुखम् । "प्रत्नोषि" प्रकर्षेणत नोषि" "तनिपत्योश्छन्दसी" ति उपधालोपः । सुखप्रदायक स्सत्वमध्वरेषु । "ईड्यः" स्तुत्यः । "सनात्" पुरातनः । इदानीमिव सर्वकालं स्तुत्यः । "होता" स्तोतृभ्यः सर्वापेक्षितप्रदः । "नव्यश्च" नित्ययुवाच । एवंविध स्त्व माश्रितार्थं तत्र तत्र "सत्सि" सीदसि । सदेः "बहुलंछन्दसी" ति शपोलुक् । सत्वं "स्वां" आत्मीयाम् । "तनुवं" तनुम् । त्वच्छरीरभूतानस्मान् । "पिप्रियस्व" संतर्पयस्व । स्वद्दास्यंकारयित्वाप्रीणय । "प्रीञ्तर्पणे"

परस्ताद्यशोगुहासु मर्मसुवर्णपक्षायंधीमहि श्रुतं वाहुना पुनःपुनरजांअर्व सुबोराजांसश्वस्थालीमणींच।

इति प्रथमोऽनुवाकः ।

---

भूरग्नयेपृथिव्यैस्वाहा भुवोंवायवेंतरिक्षायस्वाहा सुवंरादित्यायंदिवेस्वाहा भूर्भुवस्सुवश्चंद्रमंसोदिग्भ्यस्स्वाहा नमोदेवेभ्यं स्स्वधापितृभ्यो भूर्भुव स्सुवरों ॥ (१२)

इति द्वितीयो ऽनुवाकः ।

---

" अस्मभ्यं " तवतनुभूतेभ्यः । " सौभगं " सौभाग्यम् । त्वद्दास्य करणे सौभाग्यम् । " आयजस्व " आभिमुख्येन प्रयच्छ । " सुभगं मन्न " इत्युद्रांत्रादिषु पाठादन्न ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये प्रथमो ऽनुवाकः ॥ १ ॥

---

भूरित्याद्योनुवाका महाव्याहृतिनामानः । सृष्ट्यर्थतप्यमानेन प्रजापतिनाव्या[illegible]त्वात् व्याहृतित्वम् । " सभूरितिव्याहर " दित्यादि । सविभूतिकोभगवानेषु प्रतिपाद्यते । प्रजापतिकार्याव्या[illegible]यः । तस्स्कार्याः पृथिव्याद्योग्न्याद्यश्च सर्वे तदधीनस्थिति प्रवृत्तयः । एषां त्रयाणाम[illegible]वाकानां ब्रह्मोपासनादौ विनियोगः ।

भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवस्सुवरन्नं चन्द्रमसे दिग्भ्यस्स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवस्सुवरन्नमोम् ॥ (१३)

इति तृतीयोऽनुवाकः ।

---

" भूरग्नये पृथिव्यैस्वाहा " भूरादिभ्यः । निपातत्वाच्चतुर्थ्यालुक् । भूर्व्याहृति प्रतिपाद्यायाग्नयेग्न्यन्तरात्मने पुरुषोत्तमाय । " स्वाहा " आत्मानमाहुतिरूपेण प्रक्षिपामि । एवमुत्तरत्रापि योज्यम् । " नमो देवेभ्यः स्वधापितृभ्यः " एत(त्)लोकत्रयवासिदेवाद्यन्तरात्मने नमः । पित्रन्तरात्मने स्वधास्तु । " भूर्भुवस्सुवरों " एते व्याहृत्यादयः सर्वे । " ओं " भगवत एव शेषभूता इत्यर्थः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये द्वितीयोऽनुवाकः ॥ २ ॥

---

भूरन्नमित्यादि अन्तरात्मतयावस्थितस्य तस्यैव भगवतोन्नभूतस्य भोग्यत्वं तच्छरीरभूतानां व्याहृतीनां सर्वेषां पदार्थानां तच्छेषत्वं च प्रकटयति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये तृतीयोऽनुवाकः ॥ ३ ॥

भूरग्नयेच पृथिव्यैच महतेच स्वाहा भुवोवायवेचांतरिक्षायच महतेचस्वाहा सुवरादित्यायच दिवेच महतेच स्वाहा भूर्भुवस्सुवश्चन्द्रमसेच नक्षत्रेभ्यश्च दिग्भ्यश्चमहतेचस्वाहा नमोदेवेभ्यस्स्वधा पितृभ्योभूर्भुवस्सुवर्महरों ॥ ( १४ )

इति चतुर्थो ऽनुवाकः ।

---

पाहिनो अग्नएनसेस्वाहा पाहिनोविश्ववेदसे स्वाहा यज्ञंपाहिविभावसोस्वाहा सर्वंपाहिशतक्रतोस्वाहा ॥ (१५)

इति पंचमो ऽनुवाकः ।

---

भूरग्नयेचेत्यादिना तस्यैव महत्त्वगुणविशिष्टस्य पुरुषोत्तमस्य व्याहृतीनां शेषत्वं दर्शयति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये चतुर्थो ऽनुवाकः ॥ ४ ॥

---

पाहिनो अग्न इत्यनुष्टुप् । स्वाहान्तः पादः । अनयोपासन प्रतिबन्ध निरासार्थं भगवा नभ्यर्थ्यते । हे " अग्ने " " नः " अस्मान् । त्वदुपासनप्रवृत्तान् । " एनसः " तद्विरोधिरूपात्पापात् । "पाहि" रक्ष । " स्वाह " ति तस्मै हविरूप आत्मा प्रदीयते । " पाहिनो विश्ववेदसे स्वाहा " अस्मद्विरोधिपापादिक जानते तुभ्यमेनं ददामि

यश्छंदसामृषभोविश्वरूपश्छंदोभ्यश्छंदाँस्याविवे
श। सताँशिक्यः [illegible]पनिषदिंद्रोज्येष्ठइंद्रियाय
ऋषिभ्योनमोदेवेभ्यस्स्वधापितृभ्योभूर्भुवस्सुवरों(१६

इति षष्ठोऽनुवाकः ।

---

" नःपाहि " तस्मा दुरितजाना दज्ञानगोचरात् पाहि । " यज्ञं पाहि विभावसोस्वाहा " हे ' विभावसो ' प्रकाशक । ' नः ' अस्माकम् । ' यज्ञं ' भवदुपासनात्मकम् । तेभ्योविघ्नेभ्यः पाहि । " सर्वं पाहि शतक्रतोस्वाहा " हे ' शतक्रतो ' विचित्रानन्तकर्म समाराध्य । अस्मदीयं सर्वमुपासनातदंगादिकम् । ' पाहि ' रक्ष । 'स्वाहा ' मदीयानि च त्वत्पादयोः प्रक्षिपामि ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये पञ्चमो ऽनुवाकः ॥ ५ ॥

---

( यश्छन्दसामिति ) पूर्वोक्तस्य सर्वस्य भगवदीयत्व मुपदिशतः प्रणवस्य माहात्म्यं प्रतिपाद्यते । " छन्दसां " वेदानाम् । "ऋषभः" प्रधानभूतः । " विश्वरूपः " स्मृतीतिहासपुराणादि विश्ववाङ्मय रूपः । " आविवेश " " सताँशिक्यः " ' सतां ' योगिनाम् । ' शिक्यः ' शक्तिहेतुः । शक्नुवन्त्येतेनेति शिक्यः । " शकि सहोश्चे " ति कृत्य प्रत्ययः । इकारोपजनश्छान्दसः । " इन्द्रः " इन्द्रस्य परमेश्वरस्य वाचकत्वात् स्वयमिन्द्रः । " ज्येष्ठः " प्रशस्य तमः । यएवंभूतः प्रणवः " उपनिषत् " उपनिषत्प्रतिपाद्यत्वात् उपनिषत्त्वम् । अथवा भगवतः तद्दर्शिनां च समीपे निषीदती त्युपनिष त्प्रणवः ।

नमोब्रह्मणे धारणंमे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोश्श्रुतं माच्योढ्वं ममामुष्यओम् (१७)

इति सप्तमो ऽनुवाकः ।

---

" इन्द्रियाय " कायकर्मभ्यां इन्द्रियाणां साधारण प्रवृत्तियोग्यता पादनाय । " प्रोवा च " उपदिदेश । केभ्यः ? " ऋषिभ्य. " कमर्थं ? " नमोदेवेभ्यः " देवतात्मभूताय । "नमः" शेषत्वं प्रोवाच । उपदिदेश । " स्वधापितृभ्यः " पित्रन्तरात्मभूताय 'स्वधा' अमृत मात्महविः प्रोवाच । किंच । " भूर्भुवस्सुवरों " " यतोभवन्ति भूतानि भावयित्वाचयोवति । यः सुषुप्सतिचैतानि (?) तस्यैतानि निद र्शनं " " एताव्यस्ता स्समस्ताश्च चवस्रश्चतुरोहरेः । व्याहरन्ति यतोव्यूहा नतोव्याहृतय स्स्मृताः " इति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये षष्ठोऽनुवाकः ॥ ६ ॥

---

प्रणवोपदिष्टं स्थूणानिखनन्यायेन द्रढयति ( नमोब्रह्मण इति ) " धारणंमे " " अस्तु " । अस्मिन्नर्थे धारणमैकाग्र्यं भूयाद । धारणमवधारणमस्तु । कथमित्यपेक्षायां " अनिराकरणं ". अबाधित प्रतिष्ठम् । " धारयिता " धारणायाः कर्ता । " भूयासं " नित्यं ब्रह्मण एवाहं नान्यस्य कस्य चित , नापि स्वस्य भूयासमिति । हतव परिपन्थीनीन्द्रियाणि । " कर्णयोश्रुतं " इदानीं श्रुत " कर्णयोः " कर्णाभ्याम् । " माच्योढ्वं " माब्रह्मणः च्युतानिभूत । " ममामुष्य " एवं श्रुतवतोमम । " माच्योढ्वं " । वदेशोक्त्वानिगमयति (ओमिति) ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये सप्तमोऽनुवाकः ॥ ७ ॥

ऋतंतपस्सत्यंतपश्श्रुतंतपश्शांतंतपोदानंतपो यज्ञ
स्तपो भूर्भुवस्सुवर्ब्रह्मैतदुपास्स्वैतत्तपः ॥-(१८)

इत्यष्टमोऽनुवाकः ।

यथावृक्षस्यसम्पुष्पितस्य दूराद्गंधोवात्येवंपुण्यस्य

ऋतादीनां मुक्तज्ञानहेतुत्वं दर्शयति ( ऋतंतपइत्यादि ) 'ऋतं' मानसन्तथ्यम् । यथाभूतार्थ संकल्पः । " सत्यं " वाचिकम् । यथादर्शनं हितवचनम् । " श्रुत " आचार्याच्छ्रुतं वेदार्थज्ञानम् । " शान्तं " इन्द्रियाणां विषयेभ्योनिवृत्तिः । " दानं " स्वार्थेषु स्व त्वनिवृत्तिः परस्वत्वापत्तिपर्यन्ता । " यज्ञः " भगवत्समाराधनम् । एतत् सर्वम् । " तपः " स्वातन्त्र्यनिवृत्तिसाधनम् । उक्तानां ऋतादीनां भगवज्ज्ञानं प्रति गुणीभूतत्वा त्तदेवप्रकृष्टं तप इति दर्शयति । " भूर्भुवस्सुवः ब्रह्मैतदुपास्स्व " भूर्भुवस्सुवरादिकं एतत् ब्रह्मोपास्स्व । " एतत् " एव परमं " तपः " अतः ऋतादीन्येतदंगतया कुर्विति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये अष्टमो ऽनुवाकः ॥ ८ ॥

" एवं प्रणवार्थं जानतां प्राशस्त्यं तदविदुषा मनर्थंच दर्शयति ( यथावृक्षस्येति ) " वृक्षस्य " उद्यानादौ स्थितस्य चम्पकपाटला देः " सम्पुष्पितस्य " स्वकाले सञ्जातपुष्पस्य । " गन्धः " परिम ळः । " दूराद्वाति " दिगन्तरेस्वयमेवविसर्पति । " एवं पुण्यस्य कर्मणः " एवं परमपुण्यस्य प्रणवार्थरूपस्य उपासनादेः । " गन्धः" गन्धनं । प्रकाशः । " दूरात् " दिगन्तरेषु । " वाति " प्रथि तोभवति । तस्मादेतज्ज्ञानाय यतितव्यमिति । एतत्प्रसंगेन विरोधिनः

कर्मणो दूराद्बंधोवाति यथासिधारांकर्तेव हितामव
क्रामेत् यद्युवेह्युवेहर्वाविह्वलिष्यामि कर्तंपातिष्या
मी त्येवंमनृताद्वात्मानंजुगुप्सेत् ॥ (१९)

इति नवमो ऽनुवाकः ।

---

पापस्य परिहरणीयतांचाह ( यथासिधारामित्यादि ) यथा लोकेनिरू पक्कश्चेतनः । " कर्ते " गर्ते । कूपादौ । " अवहितां " स्वकौ शलप्रकटनार्थ मात्मनैवस्थापितां । " असिधारां " " अवक्रामेत् " अपक्रम्यगच्छेत् । यथासिधारान्नप्रविशति गर्तेन्च यथानिपतति तथा पक्रम्यगन्तुमिच्छति तथेति रूपयति । तद्देवनिदर्शनेन द्रढयन्नाह ( यदिति ) " युवे " यौतेर्लेटि उत्तमपुरुषाद्विवचनं । यौमि- मिश्रोभवामीत्यर्थः । छान्दसत्वाद्बहुवचनप्रत्ययः । इहअसिधारायां यौमि यदि । इहकर्तेवा यौमिइहवेति । वर्णव्यत्ययः छान्दसः । उभयथा प्यनिष्टमेवस्यात् । तथाहि-असिधाराप्रवेशे "विह्वलिष्यामि" चरणकर्तन विह्वलितोविपत्स्ये, कर्तनिपतने कर्तएवपतिष्यामि नोत्तरणंलप्स्ये, तस्मा दुभयं परिहर्तव्यमिति यथानिरूपयन्नपक्रमेत् । एवं " अनृतात् " क्रियमा णात् करिष्यमाणाञ्च " आत्मानंजुगुप्सेत " तत्र प्रवृत्तिप्रसंगे आत्मानं निन्दित्वा निवारयेदित्यर्थः । "गुपनिंदायां" अतस्सन् । पदान्यत्वं छांदसं । " विह्वदिष्यामि " " वदिष्यामि " " अमृतात् " इति पाठेषु वर्णा न्यत्वं छान्दसम् ।

इति श्रीकूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये नवमो ऽनुवाकः ॥ ९ ॥

---

अणोरणीयान्महतोमहीया नात्मागुहायांनिहि
तोस्यजन्तोः, तमक्रतुम्पश्यतिवीतशोकोधातुःप्रसा
दान्महिमानमीशम् ॥ १ ॥

\ इतः पूर्वं जगत्कारणभूतः परमात्मा नारायणः ज्ञानादिसकल गुणाकरइतिप्रतिपादितः । इदानींपुन स्तस्यैव नारायणस्य विशेषेण संकीर्तनं तद्वाचकशब्दविशेषं तदुपासनाविशेषंच प्रतिपादयितु मुपक्रमते । " अणोरणीयान् " " सहस्रशीर्षं " मित्येतावनुवाकौ पर मात्मप्रतिपादनपरत्वात् समाराधने विनियुक्तौ । एषसर्वोनुवाकस्थैष्टु भः । विशेषस्तु तत्र तत्र वक्ष्यते ।

" अणोः " सर्वेभ्यस्सूक्ष्मादात्मनोपि । " अणीयान् " अणुतरः । तथा " अणीयान्योविसोर्णाया स्सर्वमावृत्यतिष्ठति " " प्रशासि तारं 'सर्वेषा मणीयांसमणीयसा " मिति । " महतो महीयान् " पृथिव्यादेस्सर्वस्मान्महत्तरः विपुलतरः । " आत्मा " अणुतर त्वेन व्यापित्वा त्सर्वेषां भूताना मात्मा । सर्वाणि भूतानि अस्य शरीरम् । तथा " अन्तः प्रविष्ट श्शास्ता जनानां सर्वात्मा " " यआत्मनितिष्ठ न्नित्यादि । " एषसर्वभूतान्तरात्मा पहतपाप्मा दिव्यो देव एकोनारायण" इति च । " गुहायां निहितोस्य जन्तोः " जननादिधर्मेण स्सर्वस्य प्राणिजातस्य गुहायां निहितः । सर्वोपभोगेप्यक्षयनिधिवत् प्राणि हृदय गुहायां निष्ठितः । हृदयगुहानिहितत्वात्मत्वाभ्यां अस्य नाराय णत्वं सुस्पष्टम् । तस्मादयमप्यनुवाको नारायणानुवाकव त्तत्प्रति पादकत्वेन बोद्धव्यः । " तमक्रतुं पश्यति वीतशोकः " 'तं' परमा त्मानम् । 'अक्रतुं' क्रतुस्संकल्पः । " यथाक्रतुरस्मिन् लोके पुरुषोभवति तथेतः प्रेत्यभवती " ति । तादृशोपास्यरहितम् । अवाप्तसम स्तार्थत्वा त्स्वार्थं किंचनसंकल्पनीयं प्रार्थनीयमस्यनास्तीति । अथवा एवं जातीयकमेवंगुणक मेवंवृत्त महं स्वीकरिष्यामीति संकल्परहितम् ।

सप्तप्राणाःप्रभवन्तितस्मा त्सप्तार्चिषस्समिधः

सर्वरक्षणैकदीक्षित मित्यर्थः । " पश्यति वीतशोकः " तथा यदा-पश्यति तदावीतशोकोभवति । अथवा यदावीतशोकः तदापश्यति । वीतशोकत्वं नाम सांसारिकभोगेषु निस्पृहत्वात् तत्सम्प्रयोग विप्रयोगेषु निर्विकारत्वम् । तद्दर्शन हेतुमाह । " धातुः प्रसादात " धातु र्विधातु स्सर्वेश्वरस्य प्रसादात् । तथा " यमेवैषवृणुते तेनलभ्य स्त स्यैषआत्मा विवृणुते तनूस्वां " इति । स्वयमेव भगवताभिहितं 'मयाप्रसन्नेन तवार्जुनेदं रूपंपरंदर्शितमात्मयोगात" इति " ददामिबुद्धि योगन्तं येनमामुपयान्तित " इति च । " महिमानमीशं " ' महि मानं ' स्वासाधारण महामहिमयुक्तम् । " ईशं " अन्मस्वामिनम् । सर्वशेषिणम् । " पतिं विश्वस्यात्मेश्वरं " " ईशानोभूतभव्यस्ये " ति । अनेन मन्त्रेण जगत्कारणस्य सर्वव्याप्तत्व सर्वनियन्तृत्वं सर्वशेषित्वं नारायणत्वं तत्प्रतिपादनादेव तज्ज्ञानादिकमिति प्रतिपादितम् ।

तस्य पुरुषोत्तमस्य सर्वसृष्टिप्रकारं दर्शयति ( सप्तप्राणाः प्रभ वन्ति तस्मात ) प्रथमः पादः । " तस्मात् " सर्वेश्वरात् । "प्राणाः" जन्तूनां प्राणनहेतुभूताः । ' सप्तप्रभवन्ति " चक्षुरादिकाः पंच, प्राणोमनश्चेति केचित् । चक्षुरादयः पंच मनो बुद्धिश्चेत्यपरे । प्राणा दयःपंचं बाह्येन्द्रिय माभ्यन्तरमेकमिति परे । " सप्तार्चिषः " अर्चि ष्मन्तोग्नयः सप्त । अग्नीनामपि सप्तसंख्याकत्वं वर्णयन्ति " गार्ह पत्यादयः पंच ओवंवैद्युतौद्वा " विति । अथवा अर्चिष्मंतस्सूर्यास्सप्त तस्मात्प्रभवन्ति । " आरोगोभ्राजः पटरः पतंगः, स्वर्णरोज्योति षोमान् विभासः " " सप्तसूर्यादिव मनुप्रविष्टा " इति सप्तसंख्या कत्वं सूर्याणामुपपादयति । " समिधस्सप्त " " समिध्यन्त आभि रिति समिधः । तास्सप्त । तस्मादुद्भवन्ति । कास्ताः ? काष्ठ पुष्प धूप मधुपर्क बीजतन्मासानीति (?) दिव्यशास्त्रे । धूपशब्देन धूप

स्सप्तजिह्वाः, सप्तइमेलोकायेषुचरन्ति प्राणागु
हाशयान्निहितास्सप्तसप्त ॥ २ ॥

अतस्समुद्रागिरयश्चसर्वेऽस्मात्स्यन्दन्तेसिन्धवस्स
र्वरूपाः, अतश्चविश्वाओषधयोरसाश्च येनैषभूतस्ति
ष्ठत्यन्तरात्मा ॥ ३ ॥

द्रव्यरेणुरुच्यते । " जिह्वास्सप्त" अग्नेस्सप्त जिह्वा स्तस्मा दुद्भवन्ति । तथा च सप्तजिह्वा अथर्ववेदे प्रतिपाद्यन्ते "काळीकराळाचमनोजवाच सुलोहितायाच सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूपीचदेवी ळोलायमाना इति सप्त जिह्वाः " इति । " सप्तइमेलोका. " पाताळसप्तकयुक्ता भूम्या द्युपरिलोका स्तस्मादुत्पद्यन्ते । अक्षादित्वात प्रकृतिभावः । " येषु चरन्ति प्राणा. " येषु लोकेषु सर्वे प्राणा श्चरन्ति । " गुहाशयान्निहिताः" " आत्मागुहाया न्निहित " इति प्रकृतात्परमात्मनोनारायणान्निहितास्स्थापिताश्च । " सप्त सप्त " येप्यन्ये सप्तसङ्ख्यासङ्ख्याता, सप्त छन्दांसि सप्तस्वराः सप्तसोमसंस्था. सप्तपाकयज्ञसंस्था स्सप्तहविर्यज्ञसंस्थाः ऋतवश्च तस्मादेव जायन्ते ।

( अतस्समुद्राः ) " अतः " सर्वेश्वरात् सप्त " समुद्राः " प्रभवन्ति । लवणेक्षु सुरासर्पि र्दधिदुग्धजलैस्सहिता स्सप्तसमुद्राः । " गिरयश्च " हिमवदादयः । " सर्वे " पर्वताश्च । तस्मादुत्पद्यन्ते । " अस्मात्स्यन्दन्ते सिन्धवस्सर्वरूपाः " उक्तमहामाहिम्न सर्वेश्वरादेव पृथिव्यन्तरिक्षस्वर्गस्थाः "विश्वरूपा स्सिन्धवः" नद्यः । "स्यन्दन्ते" प्रभवन्ति । अथवा सिन्धुशब्देन सर्वप्रकारा आपोऽलक्ष्यन्त । कूप्याः पल्वल्यानाद्येयाश्च । " विश्वा ओषधयः " सप्तग्राम्या ओषधय स्सप्तारण्याइति याज्ञियाओषधयः । " अत. " उत्पद्यन्त इति शेषः । " रसाश्च " तद्गतामधुरतिक्ताम्लादयोरसाश्च तस्मादेव जायन्ते । किं विशिष्टादित्यपेक्षायां " येनैषभूतस्तिष्ठत्यन्तरात्मा " " येन " सर्वेश्व

ब्रह्मादेवानां पदवीःकवीना मृषिर्विप्राणां महि

षोमृगाणां, श्येनोगृध्राणां स्वधितिर्वनानां सोमः

पवित्रमत्येतिरेभन् ॥ ८ ॥

रेण । "एषः" "अन्तरात्मा" प्रत्यगात्मा । पूर्वोक्तानां च सर्वेषां भोग्यभोगोपकरण भोगस्थानानां भोक्तृभूतस्वरूपवान् तिष्ठतीति सर्वेषां भोक्तॄणां भोग्यजातानांच निर्वाहको नारायणइति सिद्धम् ।

तस्यैव विभूतीः प्रपंचयति (ब्रह्मादेवानामिति) इन्द्रयमवरुण कुबेरादीनां "देवानां" देवोत्तमानां मध्ये अयं "ब्रह्मा" हिरण्यगर्भः । "सब्रह्मासशिवस्सेन्द्रस्सोक्षरः परमस्स्वराट्" इत्याम्नातानां ब्रह्मादीनां स्वरूपस्थिति प्रवृत्तयो भगवदधीनाइति यावत् । तथा "कवीनां" क्रान्तदर्शिनां ज्ञानप्रवर्तकानां "पदवीः" पदव्यः । मार्गाः । ज्ञानप्रदर्शकइतियावत् । "ऋषि[illegible]णां" सर्वेभ्योमनुष्येभ्यः प्रकृष्टानां विलक्षणानां ब्राह्मणानां मध्ये । "ऋषिः" अतीन्द्रियवस्तुद्रष्टा । "मृगाणां" चतुष्पदां मध्ये । "महिषः" प्रकृष्टस्सिंहोयं । अत्र महिष शब्देन सिंहउच्यते । 'मृगाणाञ्चमृगेन्द्रोहं' मिति । महपूजाया मित्यस्मात् 'अविमह्योष्टिष' मिति टिषच् । "गृध्राणां" मांसाशिनां कंकादीनां मध्ये । "श्येनः" तार्क्ष्यः । 'वैनतेयश्चपक्षिणा' मिति । "वनानां सोमः" वृक्षगुल्मलतादीनां निर्वाहकः सोमोयं । तथा 'नक्षत्रग्रहविप्राणां वीरुधांचाप्यशेषतः । सोमोराज्यंदधद्ब्रह्मे' ति । अथवा "वनानां स्वधितिः" 'वनानां' मार्गनिरोधकानां । 'स्वधितिः' वज्रं । "पवित्र" पावनं । स्वविभूतीनां शोधकं । "रेभन्" एवमादिविभूतिरूपेणदीप्यमानः । "अत्येति" अतिक्रम्यवर्तते । विभूतिमध्यस्थोपि तास्ताअतिक्रम्यवर्तते

अजामेकांलोहितशुक्लकृष्णां बह्वींप्रजांजनयं
तीँसरूपां, अजोह्येकोंजुषमाणोनुशेते जहात्येनां
भुक्तभोगामजोन्यः ॥ ५ ॥ (२०)

हँसश्शुचिष द्वसुरन्तरिक्षसद्धोतावेदिष दतिथि

५ अनन्तरं जगत्कारणभूतायाः प्रकृतेरपि भगवद्विभूतित्वमाह (अजामिति ) नजायतइत्यजा । अजननस्वभावा । ' अन्येष्वपिदृश्यत ' इतिडः । तां । मूलप्रकृतिं । " एकां " सर्वभोक्तॄणामेकरूपां । " लोहितशुक्लकृष्णां " गुणत्रयमयीं । लोहितंरजः । शुक्लंसत्वं । कृष्णन्तमः । एवं गुणधर्मिणीं । " बह्वीं " देवतिर्यङ्मनुष्यस्थावरात्मिकां । " प्रजां " कार्यरूपां । भगवत्संकल्पमात्रेण, " जनयन्तीं " प्रकरणात् परमात्मनोविभूतिभूतामिति गम्यते । तां तादृशीं प्रकृतिं । " एकः " कश्चिदेकः संसारी कर्मपरवशः । " जुषमाणः " भोगलुब्धः । " अनुशेते " तस्यां पराधीनोवर्तते । अथवा तद्भोगाद्दुःखमिश्रात् अनुशयवानास्ते । अथ " अन्यः अजः " कश्चिन्मुक्तः । " एनां " अजां त्रिगुणात्मिकां प्रकृतिं । " भुक्तभोगां " कर्मक्षयात् भोक्तव्यशून्याम् । " जहाति " त्यजति । अन्यइति बद्धमुक्तानामन्योन्यं परमात्मनश्चभेदः कण्ठोक्त इत्ययंभेदो न्यायानपेक्षं सुस्पष्टः । प्रकरणान्मुक्तानामपि परमात्मविभूतित्व मनुसन्धेयम् । ५

६ उक्तमहामहिम्नो भगवतो वाचकानि दिव्यनामानि प्रथयति(हंसश्शुचिषदित्यादि ) हंतासंगानामिति कामादीन् हन्ति, तान् खादयतीति वा हंसइति मौळाः । "हंसः" भावयत स्संसारिकंध्वं हन्तीतिवा । पृषोदरादित्वात् साधुत्वं । हन्तिगच्छति सर्वशरीरेष्वितिवा हंसः । "शुचिषत्" शुचीन् सत्कुरुते, शुचिभिर्वासत्क्रियत इति,-शुचिषत् । अथवा शुचिषु सीदतीति शुचिभिरासाद्यत इति वा शुचिषत् । " वसुः " सर्वत्रवसती

दुरोणसत्, नृषद्वर सदृत सद्व्योमसद्ब्जा गोजा
ऋतजा अद्रिजा ऋतं बृहत् ॥ ६ ॥

तिवसुः । सर्वेभ्यश्श्रेष्ठइतिवावसुः । वसुश्रेष्ठमग्र्यमितिमौञ्जाः । "अन्तरिक्षसत्" अन्तरस्समीक्षनइति अन्तरिक्षसत् । अथवा अन्तरिक्षेर्सीदतीत्यन्तरिक्षसत् । अत्रांतरिक्षशब्देन मध्यमलोको विष्णुपदमुच्यते । वर्षादिदानार्थं तत्रसीदति । "होता" प्रळय काले चेतनाचेतनात्मकं सर्वं प्रपंच स्वात्मनिजुहोतीति । चातुर्होत्रादिभि स्सर्वैर्हूयतइतिवा । तेभ्य स्सर्वं ददातीतिवा । "वेदिषत्" वेद्यां स्वसमाराधनस्थानादिषु सीदतीति. वेदितरिसीदतीतिवा । "अतिथिः" अतिक्रम्यसर्वप्रमाणानि स्थितइति, तिथीर्यस्य नविद्यते सोतिथिः इतिवा । सर्वदा अपूर्वइतियावत् । नास्यतिथिरितिवा । अकालकाल्यइत्यर्थः । अस्य भजनादिषु तिथ्यादिकं नापेक्ष्यतइत्यतिथिः । तथा 'नतिथिर्नचनक्षत्रं नग्रहोनच चन्द्रमाः । श्रद्धैवकारण नृणां अष्टाक्षरपरिग्रह' इति । "दुरोणसत्" दुरारोहं दुष्प्रापं हेयप्रतिभटरूपं परमं पदं तत्रसीदतीति । तथाच निरुक्तब्राह्मणे 'त प्रज्ञातिभि रभिजघ्निवास कवीरजसः परस्तात् । अन्तर्भत्तम्भुवानिविश्वा ॰सतोस्यव न्धुर्विवृतोदुरोणसत्' (?) इति । "नृषत्" नृषुसूरिषु सीदतीति नृषत् । "वरसत्" वरेषु योगिषु सीदतीति । "ऋतसत्" ऋतेसीदतीति । ऋतशब्देन सत्वोद्रेकप्रकारः पुरुषसमष्टिरुच्यते । "व्योमसत्" व्योम्निसीदतीति व्योम शब्देना परिमितानि भूतजातानि देवतिर्यङ्मनुष्यादीन्युच्यन्ते । तथा अपरिमितेषु सीदतीति ततोव्योमसत् । "अब्जाः" अपोजनयतीति । "गोजा" गोशब्दवाच्याभूमिः । ततो व्रीहियोषध्यादीनपि जनयतीति । "अद्भ्यःपृथिवी पृथिव्या ओषधयः ओषधीभ्योन्नं अन्नात्पुरुष" इति ।

यस्मांज्जाता नपरानैवकिञ्चनाम यआविवेश भुवनानिविश्वा, प्रजापतिः प्रजयासंविदान स्त्री णिज्योतीँषिसचतेसषोडशी ॥ ७ ॥

" ऋतजाः " ऋतं यज्ञादिकं कर्म, तत्फलभूत मैहिकामुष्मिकं च. भोगजातं जनयतीति । " अद्रिजा. " अद्रिं जनयतीति अद्रिजाः । " अन्नाद भूतानि जायन्ते " इति । सर्वत्र " जनसने " ति विट् । " विड्वनो " रित्यात्वम् । "ऋतं" रीयते(?) (अर्यते) अनेनेत्युक्तस्वप्राप्ति साधनभूतमिति यावत् । तथा " शरण्यं शरणचत्वा माहुर्दिव्या मह धेयः " इति । " बृहत " सर्वेभ्यो बृहत्तरोभगवान् । स्वरूपरूप गुण विभूत्यादिभि स्सर्वप्रकारै रपरिच्छेद्यं परब्रह्मपरमप्राप्यमिति यावत । तथा " ज्यायान् पृथिव्याज्यायानन्तरिक्षा " दित्यादि ।

तस्यैव समाधिकदारिद्रतां जगद्रक्षणप्रक्रियां च दर्शयति ( यस्मादिति ) " विश्वा " विश्वानि । " भुवनानि " " यस्मात् " " जाता " जातानि । " शेश्छन्दसो " ति शिलोपः । " नपरा " नपरस्माज्जातानि । ' सुपां सुलु ' गित्यादिना पंचम्या आकारः । " नैवकिंच नास " अस्मात्परमनेनतुल्यं किंचि त्तत्वं ' नास ' नासीत । " य :" च स्वसृष्टानि भुवनानि तद्धारण नियमनार्थं " आविवेश." । तथा " तत सृष्ट्वातदेवानुप्राविशत " इति । इत्थं " प्रजापतिः " "त्रीणि ज्योतींषिसचते " तापदाहाह्लादकारीणि सूर्याग्निसोमात्मकानि इति । इत्थं " प्रजापतिः " " प्रजया " जनैस्सह । " संविदानः " एकमत्यं गतस्सन् " ज्योतींषि " " सचते " समनैति । तत्समवेत स्सर्वाः प्रजाः यथार्हं रक्षतीति ।

विधर्तारँहवामहे वसोःकुविद्वनातिनः, सवितारंनृचक्षसम् ॥ ८ ॥

अद्यानोदेवसवितः प्रजावत्सावीस्सौभगं, परादुष्वप्नियँसुव ॥ ९ ॥

विश्वानिदेवसवितर्दुरितानिपरासुव, यद्भद्रंतन्नआसुव ॥ १० ॥(२१)

इत्थं स्वरूपस्थितिकारणभूतं साक्षात्प्रजापतिं स्वरक्षणाय आह्वयति। विधर्तारमित्याद्याः षट् गायत्र्यः । "विधर्तारं" विशेषेणधारयितारं प्रजानाम् । "सवितारं" प्रसूयाज्ञापयितारं च । "नृचक्षसं" नृणांशुभाशुभानां कर्मणां द्रष्टारंच । तंत्वाम् । "हवामहे" स्तुत्या आह्वयामः। सच सर्वेश्वरः "नः" अस्मभ्यम् । "वसोः" धनजातस्य । "कुवित्" बहु "वनाति" ददातु । छेत्याडागमः । 'निपातैर्यद्यदी'त्यादिना निघाताभावः ।

एवंतावद्विशेषतः स्वापेक्षितं प्रार्थयते (अद्यान इति) हे "देव" द्योतनादि सर्वैश्वर्य चिह्नयुक्त । "सवितः" प्रसवितः । "अद्य" अस्मिन्नहनि । त्वदभिमुखक्षणएव । "नः" अस्मभ्यं त्वदीयेभ्यः । "प्रजावत्" समृद्धिमत् । "सौभगं" सौभाग्यम् । सर्वसमृद्धिहेतुभूतम् । सुभगशब्दादञ् । "सावीः" प्रसोष्व । छान्दसो लुङ् । 'बहुळंछन्दस्यमाङ्योगेपी'त्यडभावः । "परादुष्वप्नियं सुव" "दुष्वप्नियं" दुस्स्वप्नप्रभवंभयम् । "भवेच्छन्दसी" ति दुस्वप्नाद्यत् । छान्दस इकारः । "परासुव" विनाशय । अस्माकमनर्थहेतुभूतं निरस्य परमं सौभाग्यं भक्तिरूपं देहि ।

किंच (विश्वानि देवेति) हे "देवसवितः" "विश्वानि दुरितानि" त्वत् प्राप्तिविरोधीनि । "परासुव," विनाशय । "यत् भद्रन्तन्न आसुव" यद्भद्रं कल्याणं त्वत्प्राप्तिसाधनभूतं तत्सर्वं मेमह्यं । आवह आनय ।

मधुवाताऋतायते मधुक्षरंतिसिंधवः, माध्वीर्नः

स्संत्वोषधीः ॥ ११ ॥

मधुनक्तमुतोषसि मधुमत्पार्थिवँरजः, मधुद्यौ

रस्तुनःपिता ॥ १२ ॥

मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्यः, माध्वीर्गा

वोभवंतुनः ॥ १३ ॥

भगवदुपासकानां परावर विधेयतां दर्शयति (मधुवाता इति) रसनीयं परमंभोग्यं-भगवदानन्दं "मधु" शब्देन ब्रवीति। "वाता" तदुपलक्षिताः। "ऋतायते" ऋतं परमपदं प्राप्यमिच्छतां अस्माकम्। "मधुक्षरन्ति" क्षरन्तु। स्यन्दन्ताम्। "सिन्धवः" नद्योपि मधुमत्यः क्षरन्तु। "माध्वीर्नः सन्त्वोषधीः" ओषध्योपि सर्वाः नः माध्वीः मधुमत्य स्सन्तु भवन्तु। "ऋत्व्य वास्त्वे" ति निपात्यते।

(मधुनक्तमिति) "नक्तं" रात्रिरपि मधुमतीभूयात। "उषो षसि" उषोपि मधुमदस्तु। भगवद्भोगानुकूलमस्तु। "पार्थिवं रजः" पृथिव्याख्यो लोकः। सोपि मधुमानस्तु। "मधुद्यौ रस्तुनः पिता" अस्माकं पिता पितृस्थानीया "द्यौः"। द्युपर्जन्य पृथिवी पुरुषयोषित्सु पंचाग्निषु हुतत्वात् सापि। मधुमत्यस्तु।

अपिच (मधुमान्न इति) "वनस्पति" श्च अस्माकं "मधुमा" नस्तु। "मधुमाँअस्तु सूर्यः" सूर्योपितापादिरहितः-मधुमानस्तु। 'तेअस्मै सर्वे घृतमातपन्ति ऊर्जन्दुहाना अनपस्फुरन्त' इति। "गाव" श्च "माध्वीः" मधुमत्यो भवन्तु। परमरसदोग्ध्र्योभवन्त्विति। उपास्यस्य परमानन्दत्वमुच्यते।

घृतम्मिमिक्षे घृतमस्ययोनि र्घृतेश्रितोघृतमुवस्य धाम, अनुष्वध मावह मादयस्व स्वाहाकृतंवृषभ वक्षिहव्यम ॥ १४ ॥

समुद्रादूर्मिर्मधुमाँउदार दुपाँशुनासममृतत्वमानट्, घृतस्यनामगुह्यं यदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १५ ॥ (२२)

" घृतमित्यादयास्त्रिष्टुभः ।'घृ सेचन' इत्यस्मा दुत्पन्नेन घृतशब्देन सगुणस्सर्वाप्यायकोनारायणः प्रतिपाद्यते । स्वादुतमः परमात्मा " घृतं " " मिमिक्षे " सेक्तुमिच्छति । स्वगुणे स्संजीवयितुमिच्छति । " घृतमस्ययोनिः " 'अस्य' जगतः सएव कारणं ।" घृतेश्रितः " अयं प्रपंचः तस्मिन्नेवाश्रितः । तस्मिन्नेव लीनः । " घृतमुवस्यधाम " धारकं स्थितिहेतुरित्यर्थः । वकारोपजनश्छान्दसः । अथवा '-उकाराश्च; प्रकृत्यावकारोत्तर ' इतिप्रातिशाख्ये । तमेवापरोक्षयन्नाह । " अनुष्वधं " अन्वन्नं । प्रतियोग्यतम ; " आवह " त्वं सर्वं भोग्यजातमेवभूयादित्यर्थः । " मादयस्व " अनेनप्रकारेणास्मान्मादयस्व । प्रहर्षय । हे " वृषभ " सर्वभोगवहनशील । अस्माभिः " स्वाहाकृतं " स्वाहाकारेणप्रयुक्तं आत्मरूपं " हव्यं " " वक्षि " वह । एवं अस्माकं स्वच्चरणारविन्दं त्वमेवदात्वा सर्वकालं तत्रैव स्थापयेत्यर्थः । वक्षीतिव्यत्ययेनशपोलुक् । तस्मादानंदरूपस्य घृतशब्दवाच्यत्वं विवक्षितम् ।/"

" ( समुद्रादिति ) समुद्रवन्ति अस्मादिति सर्वरसानां उत्स्यन्दनस्थानात् पुरुषोत्तमात् । " ऊर्मिः " रश्मिसंघातात्मा । " मधुमान् " आस्वाद्यः । " उदारत् " उदगच्छत । " उपांशुना

चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षे सप्तहस्ता सोअस्य, त्रिधाबद्धोवृषभोरोरवीति महोदेवोमर्त्याँ आविवेश ॥ १७ ॥

वाग्रूपस्य तस्य नाम्नः सर्वकामवर्षुकत्वं प्रकटयति ( चत्वा रीति ) द्विविधोयागः । सिद्धस्साध्यश्च । सिद्धस्सर्वरक्षकोभग वान् । साध्यः तत्समाराधनरूपोयागदानहोम जपादिः । उभयोपि यागः सर्वरक्षकत्व सर्वविरोधिनिरासकत्व सर्वकामवर्षुकत्वादिभि र्गुणै वृषभत्वेननिरूप्यते । "शृगा" शृंगाणि । शृंगं हि जात्यन्तर व्यावर्तनेन स्वासाधारणस्वरूपस्य ज्ञापकम् । तद्वत् परमपुरुषज्ञाप काश्चत्वारोवेदाः शृंगत्वेन निरूपिताः । उभयत्र समानम् । "त्रयो अस्य पादाः" गार्हपत्याहवनीयदक्षिणाग्नयः साध्यस्य । स्वासाधारण त्रिपान्महाविभूतित्वात् सिद्धस्य अन्यस्य । ज्ञानशक्तिसमृद्धयोवा । पादः प्रतिष्ठा हेतुः । "द्वेशीर्षे" भोगमोक्षरूपे फले । उभयत्र समा नम् । श्रीश्च ह्रीश्चवा सिद्धस्य । "सप्त हस्तासो अस्य" सप्त छन्दां सिसप्तहस्ताः । गायत्र्युष्णिगनुष्टुप् बृहतीपङ्क्ति स्त्रिष्टुप् जगतीति सप्तछन्दांसि । गायत्र्यादिभिर्मन्त्रै र्यागे हविःप्रदानादानादिकं क्रियत इति तेषां सप्तहस्तत्वम् । सप्तप्राणाः सिद्धस्य, त्वक् चक्षुरा दयः पंच मनोबुद्धिश्चेति सप्त । लोकावासप्त । ज्वालावा । सप्तसोमसंस्था स्सप्तपाकसंस्थाश्चवा । "त्रिधाबद्धः" अथकर्मस्वभावै स्सवनत्रयैर्बद्धस्साध्यः । सिद्धस्तु परव्यूहविभवैस्त्रिप्रकारैर्बद्धः । "वृषभः" कामानां वर्षयिता । उभयत्र समानम् । "रोरवीति" सकलवेदे स्सकलशास्त्रै रेवं भृशंशब्दायते ; उभयत्र समानम् । "महः" महान् । पूज्यः । व्यत्ययेन नपुंसकलिंगत्वम् । "देवः" चेतनादि गुणयुक्तश्च । सदेवं वर्ततइति । "मर्त्याँ आविवेश"

त्रिधाहितंपणिभिर्गुह्यमानं गविदेवासोघृतमन्व
विदन्न्, इंद्रएकँ सूर्यएकं जजानवेनादेकꣳस्वध
यानिष्टतक्षुः ॥ १८॥

योदेवानां प्रथमं पुरस्ता द्विश्वाधिको रुद्रोमहर्षिः,

मर्त्यान्मरणधर्मिणः संसारिणः । मरणशब्दस्योपलक्षणत्वात् जन्म जरादुःखप्रायान् दृष्ट्वा केवलंकृपयैव तद्रक्षणार्थमाविवेशप्रविष्टवानित्यर्थः ।

एवं यागप्रसंगे तस्य स्वरूपस्वभावनिवर्तकस्य प्रणवस्य प्रवृत्तिप्रकारं दर्शयति (त्रिधाहितमिति) "त्रिधा" त्रिप्रकारम् । वर्णत्रयात्मकम् । "गवि" वेदाख्ये शब्दराशौ । "आहितं" "पणिभि:" स्पवहर्तृभिर्मन्त्रदृग्भिः । "गुह्यमानं" संव्रियमाणम् । "घृतं" सार भूतम् । क्षीरसारं नवनीतमिव वेदसारं प्रणवम् । "देवासः" देवाः । "अन्वविन्दन्" जगदनुजिघृक्षया आनुपूर्व्येण लब्धवन्तः । देवानां तदनुविन्दन प्रकारमाह (इन्द्र एक मिति) "वेनात्" व्याप्तिमतः । कान्ताद्वा परमपुरुषात् । परमपुरुषप्रसादादेवहेतोः । "इन्द्र एकं" अक्षरं "जजान" ज्ञातवान् । "सूर्यश्च" तत्प्रसादात् "एकं" द्वितीयं ज्ञातवान् । देवा संभूय "एकं" तृतीयम् । "स्वधया" अमृतेन । तद्भजनमननादिरूपेण । अनुष्ठानदशायामपि प्रीति रूपत्वात् तद्भजनादेरमृतत्वम् । "निष्टतक्षुः" वेद राशि निष्कृष्य ज्ञातवन्त इति यावत् ।

तस्यैव सर्वप्रकाररक्षकत्वं दर्शयति (योदेवानामिति) पूर्वेषां "देवानां" "प्रथमं" आद्यं हिरण्यगर्भम् । स्वपुत्रम् । "पुरस्तात्" आदिकल्पे । "जायमानं" उत्पद्यमानम् । "यः" विश्वाधिकः । सर्वदेवेभ्योधिकः स्वामी । अतः "रुद्रः" रुजं

हिरण्यगर्भं पश्यतजायमानं सनोदेव रशुभ यास्मृत्यासंयुनक्तु ॥ १९ ॥

यस्मात्परंनापरमस्तिकिञ्चिद्यस्मान्नाणीयोनज्यायोस्तिकश्चित्, वृक्षइवस्तब्धोदिवितिष्ठत्येकस्तेनेदंपूर्णं पुरुषेणसर्वम् ॥ २० ॥ (२३)

संसारादिदुःखद्रावयतीति । अत्र रुद्रशब्देन प्रकृतः पुरुषोत्तमएव निर्दिश्यते । अन्यथा श्रुतिलिंगादिसर्वप्रमाणविरोधात् । "महर्षिः" महांश्च द्रष्टाच महर्षिः । "योब्रह्माणं विदधातिपूर्वं योवैवेदांश्च प्रहिणोति तस्मा" इति पूर्वं ब्रह्माण मुत्पाद्य तस्मै वेदानुपदिष्टवान् यस्तमहर्षिः । महांश्चासावृषिश्चेति महर्षिः । कृत्स्नस्य वेदस्य दर्शनात् । अन्ये वेदैकदेशदर्शनादृषयः । "जायमानं" तं "हिरण्यगर्भं" तदा यया प्रसादरूपया दृष्ट्या "पश्यत" अपश्यत् । प्रसन्नेन चेतसा वीक्षितवान् । एवं प्रसादसुमुखः "नः" अस्मान् संसारतापाभिभूतानपि "स्मृत्या" तादृश्या बुद्ध्या । रक्षत्विति यावत् । तथा "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्विकस्सतुविज्ञेय स्सवैमोक्षार्थचिन्तकः" इति ।

रुद्र इति समाख्यामात्रेण एनामृचं रुद्रप्रतिपादिकां योमन्यते स खद्योतेनापि पाकादिकंकृत्वा तेनौदनेन क्षुत्पिपासादिकं विनाश्य सुखीभूयादिति ।

प्रकृत जगत्कारणभूतात्पुरुषोत्तमादपि परा निमित्तकारणभूतां देवतां योस्तीति मन्यते, तत्पक्षं स्वयमेव निरस्यति (यस्मात्परमिति) परत्वेनास्थितं "अपरं" अन्यत् किञ्चिदपितत्वं नास्ति । "नज्यायोस्ति" यस्मात् 'ज्यायः' प्रथुतरं स्थूलतरं नास्ति । "कश्चित्"

नकर्मणा नप्रजयाधनेन ..त्यागेनैकेअमृतत्व

...चित् । लिंगव्यत्ययः । "वृक्ष इव" "स्तब्धः" निश्चलः । "वृक्षः" वर्धुकः। सर्वापेक्षितप्रदः । "दिवि" द्योतनादिशीले परमपदे । "तिष्ठति" नित्यं स्वयं सन्निदधाति । "एकः" अद्वितीयः। सर्वसाधारणोवा । सर्वोपजीव्य इति यावत् । "तेन पुरुषेण" पूरकेण व्यापकेन । "इदं" जगत् "सर्वं" "पूर्णं" व्याप्तम् । सर्वपूरकेण परमात्मना सर्वस्य व्याप्तत्वात् तस्मादपि सूक्ष्मं तस्मादपि ज्यायः तस्मादपि परं किंचिन्नास्ति । स्यादिति सम्भावनापि न सम्भवति । अनेनमन्त्रेण पुरुषोत्तमएव सर्वधारकः सर्वव्यापी सर्वात्मा सर्वशरीरकः सर्वोपजीव्यः सर्वापेक्षितप्रदः सर्वज्यायान् सर्वा णीयान् सर्वापूर्वः समाधिकदरिद्रः पुरुषनारायणवासुदेवादिशब्द वाच्य इत्यादि सर्ववेदसारार्थः प्रतिपादित इति वेदात्मा स्वयमेव जोघुष्यत इति न तत्रा न्येषां वादिना मवकाश इति ।

तस्माद्युपाधान्तरमाह (नकर्मणानेति) "नकर्मणा" अग्नि होत्र दर्शपूर्णमास ज्योतिष्टोमादिना "यज्ञनदेवेभ्य" इत्युक्तेन । "प्रजया" पौत्रादिना "प्रजयापितृभ्यः" "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते" इत्यादि शास्त्रसिद्धेन । "धनेन" सत्पात्र विनियुक्तेन । "दानं यज्ञानां वरूथं दक्षिणा" "यज्ञेनदानेन तपसानाशकेन" इत्यादि शास्त्रचोदितेन । "अमृतत्वं" मुक्तिम् । भगवत्परिचरणैकभोगं परममोक्षम् । "नानशुः" न प्राप्नुयुः । केनामृतत्वं प्राप्नुयुः इत्यपेक्षायाम् , "त्यागेनैके अमृतत्वं आनशुः" 'एके' महात्मानः । 'त्यागेन' "सन्न्यासस्त्यागः" इत्युक्तेन त्यागशब्दवाच्येन फलसंगकर्तृत्वभोक्तृत्वादित्यागेनामृतत्वं प्राप्नुयुः । तथा "कर्मण्येवाधिकारस्तेमाफलेषु कदाचन । माकर्म फलहेतु र्भूर्माते संगोस्त्वकर्मणि ॥ मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा । निराशी र्निर्ममोभूत्वा" इति । ननु तेषां स्वरूपं परित्यज्यभग-

मानशुः,परेणनाकंनिहितंगुहायां।विभ्राजतेयद्यतयो विशंति ॥ २१ ॥

वेदांतविज्ञानसुनिश्चितार्था स्सन्यांसयोगाद्यतंय

न्तमेवोपायत्वेन निश्चिनुयात् । तथा " तस्मान्न्यासमेषां तपसा मतिरिक्तमाहुस्तानिवा एतान्य वराणि तपांसि न्यासएवात्य रेचयत्"इति। अहि र्बुध्न्यसंहितायां " यानि निश्रेयसार्थानि चोदितानि तपांसिवै। तेषां तु तपसां न्यासं अतिरिक्तं तप श्रुत " मिति। अमृतत्व मेव विशेष्यते (परेणनाकमिति) " परेणनाकं " सुखैकतानं, परमं पदं नाकं, तस्य उपरि। " गुहायां " गुह्य संवृतेदेशे । " निहितं " सर्वोपभोगेप्यक्षीयमाणं निधानमिव तत्र निहितम् । " विभ्राजते " स्वेनैव तेजसा दीप्यते । " यत् " च " यतयः " निय तेन्द्रियत्वेन प्रशान्ताविद्याकर्मवासनादिदुरिताः परमयोगिनः। " विशन्ति " प्राप्नुवन्ति । न पुनरावर्तन्ते । तस्मादेव त्यागयुक्तादमृतत्वं प्राप्नुयुरिति ।

मुमुक्षूणां तेषां मुक्तिप्रकारं दर्शयति (वेदान्तविज्ञानेति) शारीरकमीमांसाशास्त्रोक्तन्यायसद्धीचां वेदान्तवाक्यानां " ब्रह्मविदाप्नोतिपरं " " ब्रह्मवेदब्रह्मैवभवति " " सोऽश्नुते सर्वान् कामान् सह ब्रह्मणाविपश्चिता " " भिद्यते हृदयग्रन्थि श्छिद्यन्ते सर्वसंशयाः। क्षीयन्तेचास्यकर्माणि तस्मिन्दृष्टे परावरे " " यदापश्यः पश्यतेरुक्मवर्णं " " यथानद्य स्स्यन्दमानास्समुद्रे " इत्यादीनां, सुनिश्चितानां - समीचीनन्यायेन अनालम्बीकृतपूर्वपक्षन्यायानां अतएव सुनिश्चितानां " यद्विज्ञानं " श्रवणमननिदिध्यासनादिक्रमेण प्रत्यक्षताशिरस्कं, विषयभूतस्य परब्रह्मणः सकलवाङ्मनसागोचर निरतिशयानन्दरूपत्वात् तज्ज्ञानस्यापि तद्वदेव प्रीतिरूपत्वात् भक्तिरूपापन्नम् । तेन विज्ञानेन " सुनिश्चितार्थाः " भगवानेव सर्वस्य स्वामी सर्वस्येश्वरः सर्वस्य पिता सर्वस्यमाता सर्वस्याचार्यः सर्वस्य सुहृत सर्वस्य प्राप्यः सर्वस्य प्रापकः इत्यर्थरूपनिश्चयात् तच्चरणारविन्दयोरेव न्यस्तभरस्त्वरूपेणयोगेन परमोपायेन युक्ताः। " यतयः " अतएव ऐश्वर्यकैव-

श्शुद्धसत्त्वाः, तेब्रह्मलोकेतुपरांतकाले परामृतात्प
रिमुच्यंतिसर्वे ॥ २२ ॥

दहरंविपाप्मंपरवेश्मभूतं यत्पुण्डरीकंपुरमध्य

इत्यादिसकलप्राप्यार्थनिरपेक्षाः। अतएव "शुद्धसत्वाः" रजस्तमोभ्यां निष्कृष्टपरमसत्व समृद्धाः परमयोगिनोये। "ते" "ब्रह्मलोके" ब्रह्मणस्सर्वेश्वरस्य लोके वैकुण्ठाख्ये परेस्थाने। तल्लोकस्य वाङ्मनसागोचरत्वविशेषं दर्शयति। "परान्तकाले" चरमदेहावसानसमये। "परामृतात् परिमुच्यन्ति" परामृतं सर्वेश्वरं पुरुषोत्तमं, तत्कैंकर्यामृतं, प्राप्य परिमुच्यन्ति। ल्यब्लोपे पंचमी। अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धेभ्यः मुच्यन्ते सर्वेप्याश्रमिणः सर्वे निवर्णाः। तथा "मामुपेत्यतुकौन्तेय पुनर्जन्मनविद्यते" इत्यादि।

केचित्तु एषमन्त्रः क्रममुक्तिमाचष्टइत्याचक्षते। तत्प्रकरणविरोधात् उक्तोपायविरोधात सर्वप्रमाणविरोधाच्च त्रैविद्यवृद्धा न सहन्ते इदमेषएवार्थइति वेदान्तविज्ञानं भक्तिरूपापन्नं भगवत्प्राप्तिसाधनं इत्युक्तं।

तदेव विज्ञानशब्दवाच्यं उपासनं विदधाति (दहरमिति) "दहरं" दहृम्। अल्पं सूक्ष्मप्रमाणम्। "विपाप्मं" विगतपापम्। सर्वहेयप्रतिभटम्। "परवेश्मभूतं" परस्य ब्रह्मणोवेश्मभूतम्। उपासकानुग्रहार्थं भगवतासौशील्यादिगुणवत्तेन वेश्मत्वेन परिगृहीतम्। "यत्पुण्डरीकं" पुण्डरीकवत् पुण्डरीकं उपासकहृदयम्। "पुरमध्यसंस्थं" उपासकशरीरस्य मध्यवर्ति। "संस्थं"

सँस्थं, तत्रापिदह्रंगगनंविशोक स्तस्मिंन्यदंतस्तदु
पासितव्यं ॥ २३ ॥

सम्यक् स्थितम् । भगवद्राजधानीत्वादशेषध्येयत्वेनस्थितम् । "तत्रापि" तथादह्रेत्वस्मिन् पुण्डरीके "दह्रं" ततोऽपि सूक्ष्मम् । तदन्तर्गतत्वात । "गगनं" गगनवत् गगनम् । सर्वैर्गमनीयम् । कःपुनस्तु इत्यपेक्षायामाह "विशोकः" शोकादिसकलदुःखप्रतिभटभूतः । परमात्मेति यावत् । परमात्मपरामर्शात्पुंलिङ्गता । "तस्मिन्यदन्तः" तदाश्रयभूतं यत् अपहतपाप्मत्वादिगुणजातं सचतच्चोभयम् । "उपासितव्यं" उपास्यम् । एवमुपासितं परंब्रह्म स्वज्ञानादिकं प्रसन्नं भूत्वा ददातीत्यर्थः । उक्तं च छान्दोग्ये "यदिदमस्मिन् ब्रह्मपुरे दह्रं पुण्डरीकंवेश्म दह्रोस्मिन्नन्तरआकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वावविजिज्ञासितव्य" मिति ।

नन्वत्र गगनशब्देन परमात्मा न निर्दिश्यते । "तस्मिन्यदन्तस्त दुपासितव्य" मिति तस्यस्यान्यस्य उपासितव्यत्व श्रुतेरिति । एतत् त्र्यन्तसिद्धान्ताविदुषां वेदबाह्यानां चोद्यमिति त्रैविद्यवृद्धाः परिहसन्ति । छान्दोग्यएव एतद्वाक्यशेषे श्रुतिरेवं सुप्रसिद्धमुपदिशति । तथा हि । "अथ यदिदमस्मिन् ब्रह्मपुर" इति वाक्यशेषे "ब्रह्म" त्युपास्यस्य ब्रह्मणः पुरत्वेन उपासक शरीरं निर्दिश्य, तन्मध्यवर्तिनं तदवयवभूतं पुण्डरीकाकारं अल्पप्रमाणं हृदयं परस्य ब्रह्मणः वेश्म तयाभिधाय सर्वज्ञं सर्वशक्तिं आश्रितवात्सल्यैकजलधिमुपासकानु ग्रहाय तस्मिन्वेश्मनि सन्निहितं दह्राकाशशब्देन निर्दिश्य तदं तर्वर्तिचापहतपाप्मत्वादि स्वभावतो निरस्तनिखिलहेयत्व सत्यकाम त्वादि स्वाभाविकानवधिकातिशयकल्याणगुणजातं च ध्येयं "तद- न्वेष्टव्य" मित्युपदिश्यते । तत्र "तदन्वेष्टव्य" मिति तच्छब्देन दह्राकाश स्तदन्तर्वर्तिगुणजातं च उभय मन्वेष्टव्य

यद्वेदादौस्वरःप्रोक्तो वेदांतेचप्रतिष्ठितः, तस्य प्रकृतिलीनस्ययः परस्समहेश्वरः ॥ १४ ॥ (३४)

अजोन्यस्सुवनाभिस्सर्वमष्टौच ।

इति दशमो ऽनुवाकः ।

---

मित्युपदिश्यत इति निर्णीयते । कथमवगम्यतइतिचेत्तदपि श्रूयताम् । " यावान्वायमाकाश " इत्यादिना दहराकाशस्याविमहत्तां निरतिशयभोग्यतां चाभिधाय " अस्मिन् कामा स्समाहिता " इति दहराकाशं "अस्मि" न्निति निर्दिश्य, काम्यभूतांश्चगुणान् " कामाः " इति संवर्ण्य तेषां दहराकाशवर्तित्वं तेषामप्युपास्यत्वं विज्ञाय, एवमुपासीनानां सर्वेषु लोकेषु कामचार इत्यादिक मुक्तमिति भगवताभाष्यकारेण ' दहर उत्तरेभ्य ' इत्यस्मिन्नधिकरणे बहुभिर्न्यायकलापै स्समर्थितमिति तत्रैवानुसन्धेयम् ।

मुमुक्षूणामुपास्यमुपासनं चोक्तम् । उपास्यस्य परमात्मनो वाचकत्वेन " ओमिति ब्रह्म " " भूर्भुवस्सुवरों " " भूर्भुवस्सुवरन्नमों " " भूर्भुवस्सुवर्महरों " " ओमित्येकाक्षरं " " ओन्तत्सदिति निर्देशो ब्रह्मण स्त्रिविधस्स्मृतः " " तस्य वाचकः प्रणवः " इत्यादि शास्त्रप्रसिद्धस्य प्रणवस्य वेदकारणत्वं अकारस्य प्रणवकारणत्वं अकारवाच्यस्य महेश्वरत्वं उपास्यत्वं च प्रतिपादयन् प्रकृतमुपसंहरति ( यद्वेदादाविति ) " वेदादौयस्स्वरः प्रोक्तः " " वेदान्ते च यः प्रतिष्ठितः " आम्नातः । सर्ववेदान्तानामस्खलनायाविशरणाय च । तथा मानवे- " ब्रह्मणः प्रणवं कुर्या दादावन्ते च सर्वदा । स्रवत्यनोंकृतं ब्रह्मपरस्ताच्च विशीर्यते " इति । " तस्य " प्रणवाख्यस्य स्वरस्य । " प्रकृति " तया कारणतया निर्दिष्टस्य । " लीनस्य " वर्णान्तरे

उकारादिभि रसंश्लिष्टस्याकारस्य । " स परः " प्रधानतया प्रति पाद्यः सर्वेश्वरः महान् सर्वैं रुपास्यः । " परमेश्वरः " स्वामीति यावत् । तथा " ओमिति ब्रह्म " " अक्षराणा मकारोऽस्मि " " अ इति भगवतो वासुदेवस्य प्रथमाभिधानं अकारमभिदधता किन्नाम मंगळं नकृत "मिति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

नारायणीये दशमो ऽनुवाकः ॥ १० ॥

पूर्वस्मिन्ननुवाके मुमुक्षूपास्यं परंब्रह्माकारवाक्यं सएवपरमेश्वर इति सादरमुक्तं । अस्मिन् प्रसंगे सकलवेदान्तेषु कारणत्वेनोपास्य त्वेन ब्रह्माक्षराशिवशम्भुपुरुषप्रजापतिहरिदेवादिसामान्यशब्दैः प्रति पादितस्य विशेषाकांक्षायां तत्तच्छब्दसमभिव्याहारेण नारायणएव स विशेषइति सर्ववयन्तापेक्षितार्थनिर्णयो नारायणानुवाकेन क्रियते । सूत्रंच ' प्रदानवदेवतदुक्तं ' ' लिंगभूयस्त्वात्तद्धिबलीयस्तदपी ' ति । सूत्रयोरर्थः । गुणिनस्स्वरूपैक्येपि तत्तद्गुणविशिष्टाकारभेदात्तच्चिन्तनावर्तन मवर्जनीयमेव । यथा ' इन्द्रायराज्ञे पुरोडाशमेकादशकपाल मिन्द्राया धिराजायेन्द्रायस्वराज्ञे ' इति इन्द्रस्य एकत्वेपि राजत्वादि विशिष्टाकार भेदा द्देवताभेदइति प्रदानावृत्तिः । तद्वदेव । तदुक्तं संकर्षणे ' ना नावादेवतापृथक्त्वा ' दिति । लिंगभूयस्त्वादिति । परब्रह्मपरतत्व परज्योतिःपरमात्माक्षरशिवशम्भुशब्दैः सर्वपरविद्योपास्यानुद्य वाक्ये नैव तेषां नारायणत्वविधानात् तस्यप्रकरणाद्व बलीयस्त्वेन सर्वविद्यो- पास्यनिर्धारणार्थमिति निश्चीयते । नच ' सहस्रशीर्ष ' मितिद्विती यानिर्देशः पूर्वेणोपासिनासंबध्यते । ' तस्मिन् यदन्त स्तदुपासितव्य ' मिति कृत्प्रत्ययेन कर्माभिहित मिति तत्र द्वितीयानिर्देशायोगात् । ' नारायणः परः ' ' व्याप्यनारायणस्स्थितः ' ' परमात्माव्यवस्थि- तः ' इत्यादिभिरैकार्थ्यात् प्रथमार्थेद्वितीया । सूत्रार्थः । सर्वविद्यो

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्, विश्वं
नारायणं देव मक्षरं परमं प्रभुम् ॥१॥

पास्यनिर्धारणे लिंगभूयस्त्वादेव न्यायात् । लिंगभूयस्त्वात् तस्य चिह्नभूत वाक्यभूयस्त्वादित्यर्थः । तद्धि वाक्यं प्रकरणात् बलीयः । तदपि पूर्वस्मिन् काण्डे ' श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्याना ' मित्यादिनोक्तं । एवं सर्वविद्योपास्यनिर्धारणे निश्चितसति दहरविद्यायामप्ययमेवोपास्य इति पद्मकोशप्रतीकाश ' मित्यादिना हृदयाद्यभिधानं च युज्यतइत्यभिप्रायः ।

( सहस्रशीर्षं देवमित्यादि ) आद्याः पंचानुष्टुभः । ततएकादि पदा । शिष्टं ब्राह्मणमानुष्टुभं । अन्तएकाद्विपदा । " सहस्रशीर्षं " अनंत शिरस्कं । सर्वप्रदेशैशिरःकार्यसमर्थनशक्तियुक्तमिति यावत् । सहस्रशिरस्त्वेन सहस्रनेत्रादिकस्य सद्भावात् सार्वज्ञ्यमपि सूचितं । " देवं " द्योतनादिसकलगुणाकरं । " विश्वाक्षं " विश्वैः प्रदेशै श्चक्षुरिन्द्रियकार्यसमर्थं । सर्वज्ञतया सर्वं वस्तुजातं साक्षात्कृत्य तत्तदनु गुणं रक्षणादिकं सर्वशक्तित्वेन कुर्वाणं । अतएव " विश्वशम्भुवं " विश्वेषां भूतानां । " शं " सुखं । निरतिशयानन्दमुद्भावयन्तं । विश्वशम्भुत्वेन कादाचित्कशम्भुभ्योव्यावृत्तिः । " विश्वं " सर्वं स्वसंकल्पेन उत्पाद्य स्थापयित्वा व्याप्य धारणाद्विश्वं । स्वाधीन सर्वतत्वानिति यावत् । तदेवविवृणोति । " नारायणं " बद्धमुक्त नित्यानां त्रिविधानामात्मनां तेषां भोग्यभोगोपकरण भोगस्थानरूपाणां अचेतनानांच समूहाननुप्रविश्य तद्धारणनियमनरक्षणादिना सर्वकारण त्वेनास्थितमित्यर्थः । " देवं " एवं जगद्व्यापारैः क्रीडन्तं । " अक्षरं " पूर्वोक्तै स्सर्वैरपि गुणै स्सदानक्षरतीत्यक्षरं । " परमं " परोमा अस्ये तिपरमं । समाधिकदरिद्रमित्यर्थः । " प्रभुं " स्वामिनम् ।

विश्वतःपरंमनित्यं विश्वंनारायणं हरिं, विश्वमे वेदंपुरुषस्तद्विश्वमुपजीवति ॥२॥

पतिंविश्वस्यात्मेश्वरंशाश्वतं शिवमच्युतम् ,

" विश्वतःपरमं " जगद्रक्षणार्थाधिकृतेभ्यः प्रजापतिभ्य स्सर्वेभ्योपि परमं । एवंविधस्य पारम्यस्य सार्वकालिकत्वमाह ( नित्यमिति ) " विश्वं " विश्वस्यस्वामिनं । मत्वर्थीयाकारप्रत्ययांतत्वा दन्तोदात्तत्वं । " नारायणं " पूर्वोक्तनरसमूहानामयनं प्राप्यं । " हरिं " आश्रितस्य दुःखापहं । अथवा ह्रियतेस्मिन्विश्वमिति ' हरिं ' । अधि करणेइन्प्रत्ययः । स्मृतिमात्रेण पुंसां पापंहरतीति । हरितवर्णत्वाद्वा हरिः । " हराम्यघंचस्मर्तॄणां हविर्भागं क्रतुष्वहम् । वर्णश्चमेहरिश्रेति तस्माद्धरिरहं स्मृतः " इतिव्यासवचनात् । " विश्वमेवेदं पुरुषः " तस्मादिदं विश्वं पुरुषः । उत्पत्तिस्थितिलयादिहेतुत्वेन पुरुषात्मकमिदं विश्वं । पुरुषस्सर्वस्यात्मेत्यर्थः । ' तेनेदं पूर्णं पुरुषेणसर्वं ' मिति सर्वस्या त्मतया पूरणात् पुरुषत्वं । " तद्विश्वमुपजीवति " तत्तस्माद्विश्वं जगत्पुरुष मुपजीवति । उपेत्य समेत्य समाश्रित्यवर्तत इति यावत् । तथा " पितात्व मस्य जगतो निदानं बीजमव्ययं " इति । सुबालोपनिषदि ' मातापिताभ्राता निवासश्शरणंसुहृद्गतिर्नारायणः ' इति ।

आभ्यांऋग्भ्यां सर्वासूपनिषत्सु पुरुषाक्षरशम्भुदेवादिशब्दवाच्यो नारायणएवेति विशेषोज्ञापितः । अनन्तरेण प्रजापतिशिवाच्युतादि शब्दै ज्ञापितं तत्वं नारायणएवेति प्रतिपादयति ( पतिंविश्वस्येत्यादि ) " पतिं " पालयितारम् । "विश्वस्य " रक्षकमिति यावत् । पातेर्डति प्रत्ययः । " आत्मेश्वरं " स्वस्यापि स्वयमेव निर्वाहकम् । नान्यो हेतुर्विद्यते ईशनायेति । " शाश्वतंशिवं " नित्यस्वाभाविकमांगळ्या कारं । शाश्वतमिति विशेषणेन स्वव्यापारसाध्य कादाचित्कशिवत्वादि गुणेभ्योव्यावृत्तिः । तथा ' पवित्राणां हिगोविन्दः पवित्रंपरमुच्यते ' इति । " अच्युतं " च्युतोयस्यनविद्यते सोच्युतइति आश्रितेभ्यो नप्रच्यवर्ती

नारायणंमहाज्ञेयं विश्वात्मानम्परायणम् ॥ ३ ॥

नारायणपरंब्रह्मतत्त्वं नारायणःपरः, नारायण

[ ]वा । " नारायणं महाज्ञेयं " प्रजापतिशिवाच्युतादिशब्दै स्सर्वत्र त्र प्रतिपादितमर्थं नारायणमेव । " महाज्ञेयं " स्वज्ञानमात्रेण संसारादि सर्वदुरितापहम् । पूर्वोक्तसामानाधिकरण्य निदानमाह । " विश्वात्मानं " विश्वेषांभूतानामात्मभूतम् । ' तानिसर्वाणि तद्वपु ' रिति । " यस्सर्वाणि भूतान्यन्तरोयमयती " त्यादिच । " परायणं " ज्ञानवतां परमप्राप्यम् । एवं भूत नारायणं विश्वमुपजीवतीत्यनेन सम्बन्धः ।

उत्तरेण परंब्रह्म परंतत्वं परंज्योतिः परमात्मेत्यादिशब्दै रत्यन्त समाम्नातं वस्तूद्दिश्य तस्य नारायणत्वं समभिव्याहारेण विदधाति (नारायण परंब्रह्मत्यादि ) " ब्रह्मविदाप्नोति पर " मिति यथा यत्परं सनारायण इति । विसर्जनीयलोपश्छान्दसः । ननु नारायणपरमिति समासेनभवितव्यम् , तत्र विभक्तिलोपश्च सिद्ध्यति, किं छान्दसेन कल्पितेन विसर्जनीयलोपेनेति । तदेवद्वेदविद्बाह्यांबहिर्भूतानां पाषण्डानां मन्यथाज्ञानविजृम्भितं, नत्यन्तोपबृंहितै र्वेदवाक्यैविरोधात् । तथा शैवपुराणे- ब्रह्माणंप्रति भगवद्वचनं " अहमेव परं ब्रह्म परंतत्वं पितामह । अहमेव परं ज्योतिः परमात्मात्वहविभु"रिति । लैंगेच 'त्वमादिस्त्वमनादिस्त्वं प्रकृतिस्त्वं जनार्दन । पुरुषस्त्वं जगन्नाथो विष्णु र्विश्वेश्वरोभवान् ॥ परंब्रह्माखिपुरुषो विश्वमूर्तिः पितामहः । तत्वमात्र्यंभवानेव परंज्योतिर्जनार्दन ॥ परमात्मापरन्धाम श्रीपतेभूपतेप्रभो' इति । वाराहे । " विष्णुरेव परंब्रह्म त्रिभेदमिहपठ्यते । देवसिद्धांत मार्गेषु तन्नजानन्ति मोहिताः " इति । महाभारते " नारायणात्परो देवो नभूतोनभविष्यति । एतद्रहस्यंवेदानां पुराणानां च सत्तमे " ति । अपि च उत्तरपादे " तत्वंनारायणः पर " इति व्यस्तमेवाम्नायते । तद्गतिसामान्यादपि व्यस्तएवात्र नारायणशब्द इति ज्ञेयम् । " नारा

संततँ सिराभिस्तु लम्बत्याकोशसन्निभं, तस्यां
ते सुषिरँसूक्ष्मं तस्मिन्थ्सर्वंप्रतिष्ठितं ॥ ८ ॥

तस्यमध्येमहानग्नि विश्वार्चिर्विश्वतोमुखः,सो
ग्रभुग्विभजन् तिष्ठ न्नाहारमजरःकविः, संतापयति
स्वंदेह मापादतलमस्तकं ॥ ९ ॥

पुनरपि विशिनष्टि। " सन्ततं " " सिराभिः " नाडीभिः । ' सन्ततं ' समन्तात विधृतं । सर्वनाडीनामाधारत्वात। तुशब्दो विशेषद्योतकः । अयमपि विशेषः। " लम्बति " लम्बते । " आकोशसन्निभं " ईषद्विकासितकुशेशयसदृशं । " तस्यान्ते " तस्यकोशस्यान्तेमध्ये । " सुषिरं " छिद्रं । " सूक्ष्मं " अणुतरमस्तीति शेषः । " तस्मिन् सर्वं प्रतिष्ठितं " तस्मिन् सुषिरेसर्वंप्रतिष्ठितं । सर्वात्मनः परमपुरुषस्य तत्र स्थितत्वात्। "प्रतिष्ठितं" निश्चलं तिष्ठति ।

" तस्यमध्ये महानग्निः " तस्य सुषिरस्यमध्ये । " महान् " देहेन्द्रियादिनिर्वाहकः । " अग्निः " स्वयं प्रकाशरूपः । " विश्वार्चिः " विश्वतः प्रसरत् ज्ञानार्चिः । अतएव " विश्वतोमुखः " विश्वतोद्रष्टृस्वभावः । " सोग्रभुक् " सोग्निः जीवाख्यः । अग्रस्यपरमात्मनोः भोक्ता । " विभजन्तिष्ठन्नाहारं " शरीरेणाक्रियते यत् शुभाशुभं, तद्विभजन् स्वयित्वेनाभिमन्यमानः तिष्ठन् । तत्रैव म्रियमाणोपि " अजरः " जरामरणादिरहितः । " कविः " क्रान्तदर्शनः । पुनरपिविशिनष्टि । " सन्तापयति स्वन्देहमापदतलमस्तकं " आपादतलात आचमस्तकात् स्वन्देहमात्मीयं शरीरं । ' सन्तापयति ' स्वरश्मिभिः ज्ञानप्रभाभिः समन्ततः प्रकाशयतीति ।

तस्यमध्येवह्निशिखाअणीयोर्ध्वाव्यवस्थितः। (२६)
नीलतोयदमध्यस्था विद्युल्लेखेवभास्वरा ॥ १० ॥
नीवारशूकवत्तन्वी पीताभास्यात्तनूपमा, तस्याः

एवं क्षेत्रज्ञस्य स्वरूपस्वभावादिकमुक्तं । अथ उपास्यस्य नारायणस्य स्वरूपगुणादिकं दर्शयति । " तस्य मध्येवह्निशिखा " तस्याग्नेः जीवात्मनोमध्ये । 'वह्निशिखा' वहतीतिवह्निः । उक्तं तत्रजात मात्मतया स्थित्वा वहति धारयतीति वह्निः परमात्मा । तस्यवा । ' वह्निशिखा ' 'शिखावत शिखा । दिव्यं अप्राकृतं पंचशक्तिमयं शरीरम् । प्रकाशमानत्वसर्वप्रकाशकाधविधेयत्वादिना शिखाशब्देनोक्तं । " अणीयः " अणीयसी । " ऊर्ध्वा " ऊर्ध्वप्रकाशा । " व्यवस्थितः " व्यवस्थिता । लिंग व्यत्ययश्छान्दसः । पुनरपि सैवविशेष्यते । " नीलतोयद मध्यस्था " मध्यस्थनीलतोयदा " विद्युल्लेखा " यथाप्रकाशते, आत्मवर्णेन तोयदवर्णेनच, एवं, " भास्वरा " मायूरग्रीवा सदृक्षा । एवंहि शास्त्रेषु भगवद्रूपं प्रतिपाद्यते । श्रीवाराहे– ब्रह्माकमलगर्भाभो रुद्रःकालाग्निसन्निभः । पुरुषः पुण्डरीकाभो रूपंतत्परमात्मनः' इति । अत्र पुण्डरीकशब्देन पुण्डरीकपलाशमुच्यते । अभियुक्तैरेव व्याख्यातत्वात । ' अतसीपुष्पसंकाश' मितिच ।

पुनरपि सैवाविशेष्यते । " नीवारशूकवत्तन्वी " तनुतरा । " पीताभा " पीतवर्णा । प्रतप्तकार्तस्वराभा । भास्वरत्वातिशयेन पिंगळत्वमेव श्यामलत्वं ग्रसतीति भावः । ' आदित्यवर्णं तमसःपरस्तात ' ' भारूपस्सत्यसंकल्पः ' ' विद्युतः पुरुषादधि ' ' हिरण्मयःपुरुषोदृश्यत ' इत्यादयः । तेषामुपबृह्मणं मानवे ' रुक्माभं स्वप्नधीगम्यं विद्यात्तुपुरुषंपरं ' इति । श्रीविष्णुपुराणेच ' अपूर्वरूपसंस्थानं तेजसांराशिमूर्जित ' मिति । " तनूपमा " सा एवं रूपाशिखा । तस्य तनोः " उपमा " उपमानं । "स्या" दिति सम्भावनायां लिङ् । तत्तनोर्वाङ्मनसागोचरप्रकाशत्वेन एवं प्रकाराभास्यादित्यत्रातीति द्योतयति । ( तस्या इति ) साद्वस्पात

शिखायामध्ये परमात्माव्यवस्थितः ॥ ११ ॥
सब्रह्मा सशिवस्सेंद्र स्सोक्षरः परमस्स्वराट् ॥ (२६)
नारायणस्स्थिताव्यवस्थितश्चत्वारिंच ।

इत्येकादशोऽनुवाकः ।

वह्निशिखायादिव्यतनोः " मध्ये " हृदये पुण्डरीके । " परमात्मा " परमश्चासावात्माचेति परमात्मा । अनेनास्यात्मान्तरात्मभावं दर्शयति । " व्यवस्थितः " सर्वगतोप्यत्रैव विशेषेण सन्निदधाति ।

एवं नारायणस्य सर्वव्यापित्वं सर्वेश्वरत्वं सर्वात्मत्व सर्वशेषित्वं शिवशम्भ्वक्षराच्युत परतत्वपरंज्योतिः परमात्मादिशब्दवाच्यत्व समाधिकदरिद्रत्वं सर्वजीवान्तरात्मत्वं दिव्यज्योतिर्मयविग्रहत्व मित्यादयः प्रतिपादिताः । अनन्तरं जगदीश्वरत्वेनप्रसिद्धानां नारायणविभूतित्वं दर्शयति ( सब्रह्मेति ) येत्र जगत्स्रष्टाण्डाधिपतिः पितामहः सनारायणएव । तस्य शरीरत्वेन विभूतिभूतइत्यर्थः । " सशिवः " तथा शिवश्च । " सेन्द्रः " विभूतित्वेन प्रसिद्धस्य इन्द्रस्याम्नानामितरेषामपि तद्विभूतित्वप्रतिपादनार्थम् । " सोक्षरः परमः स्वराट् " " अक्षरः " जन्मादिविकाररहितः । " परमः " साम्यापन्नः । " स्वराट् " मुक्तात्मा । सोपि तद्विभूतिभूत इत्यर्थः । तथैव मुक्तानधिकृत्य " येन येन धातागच्छति तेन तेन सहगच्छती " ति " तद्यथातरुणवत्सावत्सं वत्सोवामातरं छायावासत्वमनुगच्छेत्तथा " " एतमानन्दमयमात्मान मुपसंक्रम्य इमान् लोकान् कामान्नीकामरूप्यनुसंचरन् " इत्यादि ।

अत्र केचित् अक्षर परम स्वराट् शब्दवाच्यभेदं वर्णयन्ति । तदयुक्तम् । " सब्रह्मासशिवस्सेन्द्र " इति " सोक्षर " इति प्रति विभूति सहशब्दनिर्देशा त्परमस्स्वराडित्यत्र तथा निर्देशाभावाच्च । मुक्तस्य " सस्वराड्भवति " " आप्नोति स्वाराज्य " मित्यादिभिः स्वराट्त्वोपपादनाच्च । अतएव चानन्याधिपतिरित्यस्मिन्नधिकरणे सूत्रकारोपि तस्यानन्याधिपतित्वं न्याये निर्णीतवानिति ।

एवमादिगुणविशिष्टं परब्रह्मादिशब्दवाच्यं नारायणमेव उक्त गुणविशिष्टं ध्यानोपासनादिविषयभूतं योगशुद्धेनमनसा हृदयपुण्डरीके यउपासते, ते संसारादि सकलदुरितं तीर्त्वा तच्चरणारविन्द परिचर्यामहानन्दं प्राप्नुयुरिति, श्रुत्यादयोपि नारायणमेवोक्तगुणविशिष्टं ध्यानोपासनादि विषयभूत मुपदिशन्ति । कठवल्यां 'तद्विष्णोः परमंपदं' मित्युपक्रम्य 'एतदालंबनंश्रेष्ठ मेतदालंबनं परम् । एतदालंबनंज्ञात्वा ब्रह्मलोकेमहीयत' इति । मैत्रायणी सुबालोपनिषदादिषु नारायणस्यैव ध्येयत्वमुक्तम् । व्यासस्मृतौ 'ध्यायेन्नारायणं देवं एकाग्रे श्रद्धयान्वितः । शंखचक्रगदापद्मपाणिनं दिव्यभूषणं' इति । दक्षस्मृतौ "ध्यायेन्नारायणंदेवं स्नानादिषु चकर्मसु । ब्रह्मलोकमवाप्नोति नचेहाजायतेपुनः" इति । पैठीनसिस्मृतौ- "अतिपापप्रसक्तोपि ध्यायेन्निमिष मच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः" इति । योगयाज्ञवल्क्ये- "ध्यायेन्नारायणंदेवं स्नानादिषु चकर्मसु । प्रायश्चित्तिर्हि सर्वस्य दुष्कृतस्येतिवैश्रुतिः" इति । सर्वेषु पुराणेषु

लोड्य सर्वशास्त्राणि विचार्यच पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयोनारायणस्सदा ॥ एवमेव विजानीत नात्रकार्याविचारणा । हरिरेक स्सदाध्येयो भवद्भि स्सत्वसंस्थितैः" इति । तथापुराणांतरेषु – "ध्यायन्तिये सततमच्युत मीशितारं निष्कल्मषं प्रवरपद्मदळायताक्षम् । ध्यानेनतेन हतकल्मषचेतनास्ते मातुःपयोधररसं नपुनः पिबन्ती'त्यादि ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

नारायणीये एकादशो ऽनुवाकः ॥ ११ ॥



सर्ववेदान्तेषूपास्यतयाप्रतिपादितस्य प्राप्यस्य परत्वं नारायणशब्दवाच्यत्वं नारायणानुवाकेप्रपंचितम् । एतदनुवाक शेषभूतेन उत्तरेणानुवाकेन "ऋतंसत्य" मित्यादिना तस्यैव प्राप्यत्वं प्रापकत्वं

ऋतँसत्यं परंब्रह्म पुरुषंकृष्णपिंगळं, ऊर्ध्वरेतंवि
रूपाक्षं विश्वरूपायवैनमः ॥ (२७)

इति द्वादशो ऽनुवाकः ।

---

अक्षयत्वं परत्वं निरतिशयबृंहणत्वं ज्योतिर्मयत्व मुत्कर्षगुणत्वं पुण्ड-
रीकाक्षत्वं विश्वरूपत्वमित्यादिकं प्रतिपाद्यते ।

( ऋतंसत्यं ) अनुष्टुप् । ऋयते प्राप्यतेऽनेनेति " ऋतं " स्वप्राप्तेः स्वयमेवोपाय इत्यर्थः । " एषएवसाधुकर्मकारयति " " यमेवैषवृ णुते तेन लभ्य " इति श्रुत्यन्तरेभ्यः । " सत्यं " सर्वदा सर्वं स्वयं साक्षादपरोक्षस्वरूपत्वात् सत्यम् । " परं " सर्वस्मात् परम् । प्रधानमित्यर्थः । "पुरुषान्नपरं किंचित्" "यस्मान्नपर" मिति च । "ब्रह्म" परिवृढं । 'परं' इति विशेषणेन इतरेभ्यः प्रकृतिप्रजापत्यादिभ्यो ब्रह्मशब्द वाच्येभ्यो व्यावृत्तम् । " पुरुष " सर्वनिर्वाहक पूरकं पूरयितारंवा । " कृष्णपिंगळं " [illegible]घननीलतोयद विद्युल्लेखाप्रख्य सौन्दर्यलावण्ययो [illegible]रूपं । "ऊर्ध्वरेतं" रेतश्शब्देन वीर्यादिगुणजातं लक्ष्यते । ऊर्ध्वशब्देन तेषामुत्कर्षः । उत्कृष्टवीर्यादिगुण मित्यर्थः । छान्दस स्सकारलोपः । " विरूपाक्षं " विशिष्टरूपे अक्षिणीयस्य । तथा " यथा कप्यासं पुण्डरीकमेवमक्षिणी " इति अक्ष्णोर्निदर्शनादिति । समा प्तान्तः । तं पुरुषं परं विद्यादिति पूर्वेणसम्बन्धः । पूर्वोक्तप्रकाराद्ध गुण्यात् सर्वत्र उपास्यस्य पुण्डरीकाक्षस्य प्रतिपादनात् इतरेषां " आब्रह्म स्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनःकर्मजनित संसारवश वर्तिनः ॥ यतस्ततोनतेध्याने ध्यानिनामुपकारकाः । अविद्यान्त र्गतास्सर्वे तेहि संसारगोचराः " इति ध्येयत्वप्रतिषेधा न्नारायणाद्ध वाकशेषात् नारायणपरंब्रह्मेत्युक्तार्थं प्रत्यभिज्ञानाच्च शाखान्तरेषु

आदित्योवाएषएतन्मण्डलं तपतितत्रताऋचस्त

दृचांमण्डलँ सऋचांलोकोथयएषएतस्मिन्मण्डलेर्चि

र्दीप्यते तस्मिन्सामानिसाम्नां(मण्डलँसाम्नां) लो

कोथयएषएतस्मिंन्मण्डलेर्चिषिपुरुषस्तानि यजूंषि

पुण्डरीकाक्षस्यैव उपास्यत्ववचनात् सर्वेषां विशेषणानामयमेवार्थ इत्य ध्यवसायात् तस्यैव शेषित्व मुपासितुः प्रत्यगात्मनः शेषत्वं च दर्शयति । "विश्वरूपाय वैनमः" उक्तप्रकारेण सर्वानुग्रहार्थं सर्वात्मतयावस्थि ताय शेषभूतोहम् । "वै" इति शास्त्रप्रसिद्धिं द्योतयति । "नमः" नमइदंनान्यस्मै इत्यनन्यार्हशेषत्वं स्वात्मनिष्ठत्वेन द्रढयति ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये द्वादशो ऽनुवाकः ॥ १२॥

---

"सयश्चायं पुरुषे यश्चासावादित्ये" इत्युपासकानां हृदयपुण्डरीके आदित्ये च भगवतस्सर्वेश्वरस्य उपासनं विहितम् । तत्र हृदयपुण्ड रीके दिव्ये यदुपासनं तदुदितम् । अनन्तरमादित्ये यदुपासनं तत्प्र कारः प्रपंच्यते (आदित्योवा एषइति) चेय महदादि विभाग कर्ता आदित्य स्वः । "एषः" इत्यंगुल्यानिर्दिशति । आदितेरपत्यत्वादय मादित्यः । "वै" इति तत्र प्रसिद्धिं दर्शयति । "एतन्मण्डलं तपति" तत्र यदेतत् ज्योतिर्मण्डलं तपति प्रकाशादिना जगदनुगृ ह्णाति । "तत्रता ऋचः" प्रकृतिप्रतिपादिका ऋचस्तिष्ठन्ति । तस्मात् "तदृचांमण्डलं" ऋचांसमूहः । "सः ऋचांलोकः" स्थानम् । तत्रैव ऋचोलोक्यन्त इतियावत् । ऋगादीनां तत्रस्थितेरविनाभा वात् सामानाधिकरण्य निर्देशः । "अथय एषः" अयमादित्यः । तस्य । "एतस्मिन्मण्डलेर्चिर्दीप्यते" प्रकाशते । "तानिसामानि" तस्मात् । "ससाम्नांलोकः" स्थानम् । सामानि तत्रलोक्यन्त इति यावत् । "अथय एषः" अयमादित्यः, तस्य । "एतस्मिन् मण्डले र्चिषिपुरुषः" तदभिमानी आदित्याभिमानीपुरुषः । "तानि यजूंषि"

सयजुंषां मण्डलँसयजुंषां लोकस्सैषा त्रय्येव विद्या
तंपति यएषोंतरादित्ये हिंरण्मयःपुरुषः॥ (२८)

इति त्रयोदशोऽनुवाकः ।

अादित्योवैतेजओजोबलं यशश्चक्षुश्श्रोत्रमात्मा

यजुस्समूहात्मकम् । "सयजुषां मण्डलं" सयजुषां समूहभूतः । "यजुषां लोकः" स्थानम् । यजूंषि तत्रलोक्यन्त इतियावत । तस्मा दादित्यः । "सैषात्रय्येवविद्यातपति" तदविनाभूतस्तपति । एवं भूते "आदित्येय एषोन्तः" जगन्नियमनार्थं वर्तते । सकीदृश इत्यपेक्षायां "हिरण्मयः" हितरमणीय ज्योतीरूपः । "पुरुषः" सर्वनिर्वाहकः । सउपासितव्यः इति शेषः । तथा "ध्येयस्सदा सवितृमण्डल मध्यवर्ती" त्यादि ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये त्रयोदशोऽनुवाकः ॥ १३ ॥

---

तस्यैवोपास्यस्य सर्वात्मकत्वं दर्शयति (आदित्योवैतेज इत्या दिना) योयमादित्य रथस्थित उपास्यत्वेन चोदितोहिरण्मयः पुरुषः, सः । "तेजः" सर्वप्रकाशादिना उपकरोतीति तेजः । "ओजः" देहशोभाकरः । ओजः आर्जवे । बलयतीति "बलं" बल प्राणने सर्वधारकम् । "यशः" यजतेर्यशः पूजनात । "चक्षुः" दर्शनात "श्रोत्रं" श्रवणात । आप्नोतीति "आत्मा"

मनोमन्युर्मनुर्मृत्यु स्सत्योमित्रोवायुराकाशः प्राणो
लोकपालः कः किंकंतथ्सत्यमन्नमायुरमृतोजीवोवि
श्वः कतमस्स्वयम्भुः प्रजापतिस्संवथ्सरइति संव
थ्सरोसावादित्यो यएषपुरुषएषभूतानामधिपतिर्ब्रह्म
ण स्सायुज्यँ सलोकतां माप्नोत्येतासामेव देवतानाँ

सर्वस्य हिताहितं मनुत इति "मनः" मननात्संकल्पात् । "मन्युः" क्रोधः । अभिमाननात् "इदं त्यक्तव्यं इदं रक्षितव्य" मिति । मनुत इति "मनुः" । "मृत्युः" मरणात् । सतिसाधुत्वात् "सत्यः" साक्षित्वाच्च । "मित्रः" सर्वस्यमन्तात्च । "वायुः" सर्वस्य प्रेरणात् । "आकाशः" आसमन्तात् प्रकाशमानत्वात् । "प्राणः" श्वासादिकारकत्वात् । "लोकपालः" लोकानां पालनात् । "कः" निरुपाधिकः प्रष्टव्यः । "किं" नित्याव्यक्तम् । "कं" सुखम् । कमनीयत्वात् । "तत्" व्यापकं परोक्षं वातनोतीति तत् "सत्यं" सच्चत्यच्च । चेतनाचेतनात्मकं सत्यम् । समाहारद्वंद्वः । "अन्नं" अदनीयम् । "आयुः" आयनात् । "अमृतं" अमृतत्वनिमित्तम् । "जीवः" जीवात्मा जीवनात् । जीवननिमित्तंवा । "विश्वः" विश्वात्मप्रवेशनात् । "कतमः" अशक्य निर्धारणः । सर्वगत्वात् । "प्रजापतिः" प्रजानांस्वामी । "संवत्सरः" सम्यग्वसन्त्यनेन सर्वाणि भूतानीत्यादिगुणकोय उक्तः "संवत्सरः" । सएवस्वयं "आदित्यः" "सएषपुरुषः" "एषभूतानामधिपतिः" देवोमण्डले वर्तते । एवंभूतः उपास्य इति । एवं ज्ञात्वाय उपासीत । सः । "ब्रह्मणः" परस्य भगवतः । "सायुज्यं" सयुग्भावम् । "सलोकतां" समानलोकतां च । "आप्नोति" "एतासांच देवतानां"

सायुज्यँ सार्ष्टिताँ समानलोकतां माप्नोति यएवंवेदे त्युपनिषत् ॥ (२९)

इति चतुर्दशो ऽनुवाकः ।

घृणिस्सूर्यआदित्योमर्चयंति तपस्सत्यं मधुक्षरं

तेजः प्रभृत्यभिमानिनीनाम् । " सायुज्यं " " सार्ष्टितां " अविरहित तांच । इच्छाचेत्प्राप्नोति । " यएवंवेद " एवमुपासीत । " इत्यु पनिषत् " एतस्मिन्ननुवाके उपास्यत्वेन ब्रवीति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये चतुर्दशो ऽनुवाकः ॥ १४ ॥

अस्यैवोपास्यस्य प्रतिपादकं प्रणवान्त मन्त्रं तदुपासकानां सिध्य ञ्चि च दर्शयति ( घृणिरित्यादि ) तत्प्रतिपादको मन्त्रः । एतन्मा हात्म्यं भगवताश्रुतिदात्मना प्रतिपादितं " घृणिरितिद्वे अक्षरे " इत्यादिना । " घृणिः " द्योतनशीलः । " घृक्षरणदीप्तयोः " " घृसेचने " अन्यतरस्मान्निपातितः । यद्वाघृणावान् । घृणानामपरदुःखासहन रक्षणस्वभावता । सर्वं प्रसूतइति वा सर्वं प्रसूय तत्र सरतीति वा " सूर्यः " " राजसूय सूर्य " त्यादिना सुवति सरत्योः अन्यतरस्मा न्निपातितः । [illegible] " सूर्यः " [illegible] इति वा । एवं बहुप्रकारं सूर्यशब्दनिर्वचनं द्रष्टव्यम् । अत्र इयोपजनः " सूर्यइति त्रीणि " ति ब्राह्मण दृष्टेः । आदित्येनिपातात " आदित्यः " " दित्येदित्ये " त्यादिनाण्यः । अथवा कामादित्यः प्राप्यः आदित्यः ? यएवं भूतः " ओं " उपासकः । शेषभूत इति यावत् । एवम् । " अर्चयन्ति " तद्विदः । " तपस्सत्यं मधुक्षरन्ति " तपश्शब्देन

ति तद्ब्रह्म तदाप आपोज्योतीरसोमृतंब्रह्म भूर्भुव

स्सुवरों ॥ (३०)

इति पञ्चदशोऽनुवाकः ।

तपसः फलं भोगमोक्षाख्यं लक्ष्यते । " सत्यं " यथावस्थितं, नविपर्यस्तं वस्तु स्वरूपम् । 'मेधुं' सर्वात्मभोग्यं भगवद्गुणामृतम् । "क्षरन्ति" क्षारय न्त्यस्यांतदर्शनाशीलायोगिनः । " तत ब्रह्म " तदेवं सकलजगत्का रणं अचेतनं प्रधानम् । " ब्रह्म " बृहत्व बृंहणत्व गुणयोगित्वात् । प्रधानमपि क्वचित ब्रह्मेत्युच्यते । तथा 'तस्मादेतद्ब्रह्मनामरूपमन्नञ्चजायते' इति । " तद्ब्रह्म " ब्रह्मात्मकं प्रधानमस्य शरीरभूतमित्यर्थः । " तदापः " जीवात्मकं आप्नोतीत्यापः । आप्नोतिरसुन्प्रत्ययान्तः । जीवात्मकः प्रकृतेः व्यापकत्वात् अप्शब्देन प्रसिद्धा आपउच्यन्ते । तदपि तदेव । " यदं त्रुवैष्णवःकाय " इत्यादि । " ज्योति " शब्देनापि तथा । तेजश्चास्मिविभावसा वित्यादि । " रस " शब्देनापि प्रसिद्धात्मः । तथा ' रसोहमप्सुकौंतेये ' ति । " अमृतं " ' त्रि पादस्यामृतंदिवी ' त्युक्तमहाविभूतिः । ब्रह्मशब्दस्तस्यैव विशेषणं । भवन्त्यस्यां सर्वाणिभूतानीति " भूः " भूलोकः । कर्मफलभोगक्षये प्राणिनन्सूक्ष्मदेह परिग्रहेणामुष्माद्भवन्तीति " भुवः " सुष्ठुव्याप्यते सुकृतिभिरिति " सुवः " भूरादयोलोकाः भोगस्थानानि । तत्स्थाश्च प्राणिनः सर्वे परमात्म शेषभूताइति प्रणवेन निगम्यते ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिष द्व्याख्याने

नारायणीये पञ्चदशोऽनुवाकः ॥१५॥

सर्वो॑वैरु॒द्रस्तस्मै॑रु॒द्राय॒नमो॑अस्तु, पुरु॑षोवैरु॒द्र स्सन्मह॒ोनमः, विश्वं॑भू॒तम्भुव॑नं चि॒त्रम्ब॑हु॒धा जा॒तं॒ जाय॑मान॒ञ्च॒यत्, सर्वो॒ह्ये॑षरु॒द्रस्तस्मै॑रु॒द्राय॒ नमो॑अस्तु ॥ (३१)

इति षोडशोऽनुवाकः ।

---

अथोपासनविपाकेन संजातभक्तिप्रकर्षैस्तथैवभक्त्या गुणदोषविवेकाक्षमैः निष्प्रत्यूहभगवद्गुणप्रबुभुत्सुभिः तृणचलनेपि तद्विमानिभिः क्रोधनहिंसकत्वादि रुद्रगुणश्रवणात् तज्ज्ञानकारणं तमेव रुद्रं विरुद्धं मन्यमाने रुपासके स्वरितरुद्रनामधेये त्रिभिरनुवाकै रुद्रस्तूयते ( सर्वोवैरुद्रइत्यादि ) एषां स्वरितरुद्राभिधेयत्वं शीघ्रफलार्थिनां जप्यत्वात् । एषांस्तुतिः पूजावचनादिभि रभियुक्तैर्निर्णीता । " सर्वः " अयं प्रपंचः । " रुद्रोवै " तदनुग्रहाधीनत्वात् । वैशब्दः प्रसिद्धिद्योतकः । " रुद्रः " रोदयिता । 'रोदेर्णिलुक्चे' तिरप्रत्ययः । "तस्मै रुद्रायनमोअस्तु " अनेननमसापूजितस्सन् अस्मदुपासनं मा हिंसीदितिभावः । ( पुरुषोवैरुद्र) इत्यादि पुरुषत्वेनस्तौति । पुरुषमाहात्म्यं पुरुषसूक्तविवरणएव दर्शितं । एवं प्रभावस्सन् । अतएव " महः " महान्, पूजितः । " नमोनम " इति नमस्काराद्विरुक्तिःप्रशंसार्था । किंचित् " विश्वं " प्रपंचं । " भूतं " उत्पन्नं । " भुवनं " भूतजातं । " चित्रं " चयनीयं । " बहुधा " बहुप्रकारं । "जातं जायमानं " उत्पन्नं जनिष्यमाणंच । " यत् " तत्सर्वं । "रुद्रः" एतत्प्रसादायत्तं । अस्मिन् क्रुद्धे विनष्टं भवतीतिभावः ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये षोडशोऽनुवाकः ॥ १६ ॥

---

कद्रुद्रायप्रचेतसे मीढुष्टमायतव्यसे, वोचेमशन्तं
महृदे, सर्वोह्येष रुद्रस्तस्मै रुद्रायनमोअस्तु॥(३२)

इति सप्तदशोऽनुवाकः।

---

नमोहिरण्यबाहवे हिरण्यपतयेम्बिकापतयउमा
पतये नमोनमः ॥(३३)

इत्यष्टादशोऽनुवाकः।

---

( कद्रुद्रायेति, ) गायत्रीयजुरन्ता। "कद्" प्रशस्तं। प्रशस्तवाचीनिपातोयं। प्रशस्तायेत्यर्थः। "प्रचेतसे" प्रकृष्टेपरमात्मनि निहितचेतसे। "मीढुष्टमाय" स्तोतृतमाय। अतएव जगदनुग्राहकाय। "तव्यसे" तपस्वते। प्रवृद्धाय "हृदे" हृदये। भीषणतया वत्रसन्निहिताय। "रुद्राय" "शन्तमं" सुखसाधकतमं। स्तोत्रमित्यर्थात्। "वोचेम" ब्रमहि। क्रियाशिष्टं [illegible] वचउम्। सर्वोह्येषइतिव्याख्यातम्।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये सप्तदशोऽनुवाकः ॥१७॥

---

"नमोहिरण्यबाहवे" हितरमणीयबाहवे। "हिरण्यपतये" धनानां पतये। "अम्बिकापतये" अम्बिकायाभर्त्रे। "उमापतये" उमायावल्लभाय। आदरार्थं पुनःपुनर्वचनं। कृपासाहचर्यात् शान्तिकराय। "नमोनम" इति पुनः प्रशंसति।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये अष्टादशोऽनुवाकः ॥ १८ ॥

---

यस्यवैकंङ्कत्यग्निहोत्रहवंणीभवति प्रतिष्ठिता प्रत्येवास्याहुतयस्तिष्ठन्त्यथोप्रतिंष्ठित्यै ॥ (३४)

इत्येकोनविंशोऽनुवाकः ।

कृणुष्वपाजइतिपञ्च ॥ ( ३५ )

इति विंशो ऽनुवाकः ।

तद्प्रसंगात् तादृशमग्निमपिस्तौति ( यस्यवैकंकतीति ) तस्तु त्यर्थं तदस्य धारणाराधके ग्निहोत्रे स्तुतिः क्रियते । ' सायत्राहुतिः प्रत्यतिष्ठत्ततोविकंकतउदतिष्ठत्तेन प्रजाअसृजत ' इति विकंकतस्य प्रजासृष्टिहेतुत्वंश्रूयते । " यस्य " आग्निहोत्रेणाग्निसाधयतः । " वैकंकती " विकंकतस्याविकारः । " अग्निहोत्र हवणीभवति " ' पालाशादिभवेति ' त्यर्थः । अग्रयेहोतव्यं अग्निहोत्रं हविर्गत्तदनयापि हूयत इत्यग्निहोत्रहवणी । " अस्याहुतयः प्रतितिष्ठन्ति " फलसाधनत्व रूपात्स्वरूपान्नप्रच्यवन्ते । एवं कदाचिदप्रच्युताः तथाप्रतितिष्ठन्ति । यजमानस्यापि " प्रतिष्ठित्यै " वैकंकतीभवति ।

इति श्री वररनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये एकोनविंशोऽनुवाकः ॥ १९ ॥

अत्र रक्षोजनप्रशान्त्यर्थं " कृणुष्वपाज " इत्यादयः पंचमन्त्रा जप्या इति ( कृणुष्वपाज इति पंचेति ) प्रतीकोपादानेनाम्नाताः । सर्वा स्त्रिष्टुभः । अस्मद्विरोधिनो राक्षसान्विनाशयेति प्रथमया भगवन्तं

कुर्वन्तं ( कृणुष्वेत्यादि ) हे " अग्ने " अग्र नयनशीलपुरुषोत्तम । " नः " अस्माकम् । " पाजः " बलम् । " कृणुष्व " कुरु । व्यत्ययेनरनुः । पजोबलम् । पीन्वा जनयतीति पाजः । परबलादीन् जडमिवपीत्वास्वीयान् जनयति उज्जीवयतीति वा पाजशब्दोबलेवर्तते । तत्र निदर्शनम् । " प्रसितिं नपृथ्वीं " पृथुतरां प्रसितिम् । सूत्ररज्जुनिर्मितां प्रसितिं जालमिव । षिञ् बन्धेन । प्रसयनस्य बन्धनस्य हेतुत्वात् प्रसितिरिति जालमुच्यते । " न " उपमार्थे । यथा प्रसितिं मत्स्यान् नावृणोति तथा त्वं बलेनास्म द्विरोधिनस्सर्वानावृणोति । किञ्च । " याहि " आयाहि । क इव । " राजेव " यथा सर्वप्रजारञ्जनतः राजा । " अमवान् " अमात्य वान् । " इभेन " परमवाहनेन याति । तथा पुरुषोत्तम त्वमपि वेदमूर्तिना औपवाह्येन गरुडेन त्वदसाधारण परिजनपरिच्छदा न्वितो स्मत्प्रतिबन्धनिरसनार्थं आगच्छ । अपि च । " तृष्वीं प्रसितिं " विस्तारवज्जालम् । " अनु " क्रमेण " द्रूणानः " द्रावयमाणः । विक्षिपन् । " अस्तासि " अस्मच्छत्रून् क्षेप्तासि । न केवलं क्षेप्तासि । " रक्षसः " रक्षसान् । पापादीन् " तपिष्ठैः " तापवत्तरैः । तवदिव्यैरायुधैः । " विध्य " ताडय । विनाशयेत्यर्थः ।

कृणुष्वपाज इति होमार्थं पंचमन्त्रा उपादीयन्ते । तेचाग्नेयाः । " ओजः पाजो जप " इत्यादि बलनामसुपठ्यते । " पातर्जुकच " इत्यसुनन्तं प्रयुक्तम् । बलस्य रक्षणहेतुत्वात । प्रसितिः बन्धन रज्जुः वागुरा । पृथ्वी दीर्घा । वागुरामिव पाजोबलम् । रक्षांसि परितः कुरु । यथा कश्चिद्राजा बलवान् अमात्यैस्सहितः अरोगोवा । जपहोमादिभिः शत्रूणां रोगानुत्पादयन्नभिनयाति तद्वत् रक्षांसि प्रति याहि । " शीघ्रंतिर्ष्वीवियंतूर्णं " प्रति क्षिप्रनामसुपठ्यते । अनुद्रूणानः अनुधावन् । छान्दसोदीर्घः । त्रिष्वीतूर्णां प्रसितिं मत्स्यबन्धनीम् । साहिक्षिप्ता शीघ्रंपतति । अस्तासि क्षेप्तासि । भवानेवमुभयीं प्रसितिं कृत्वा । तपिष्ठैः तपनशीलैः जपैः रक्षसः रक्षांसि । विद्धय ।

( तवेति ) " भ्रमासः " भ्रमण शीलाः । "उल्काः" " आशुयाः शीघ्राः । जसोयाजादेशः । " पतन्ति " पतन्तु । " शोशुचानः " अत्यन्तंदीप्यमानस्त्वम् । " धृषता " धाष्टर्येन । इगुपधलक्षणः कः । तस्मि सुपोलुक् । " अनुस्पृश " दहेत्यर्थः । " अग्ने " " तपूंषि " तपनशीलाः । उल्काः । " पतंगान् " शलभानिव । " विष्वक् " " विसृज " " जुह्वोअसन्दितः " येकेचि ज्जुह्वामाज्यं गृह्णन्ति, तेष्वग्निर्जुह्वाबद्धोभवति, नान्यत्रगच्छति । तथा जुह्वा अस न्दितः यजमानेषु सत्स्वपितत्रनगच्छति । एवं अस्मान्निकटे यन्त्रितस्त्वन् रक्षांसि प्रत्युल्काविसृजेत्यर्थः ।

( प्रतीति ) " तूर्णितमः " अतिशीघ्रः । " प्रति " रक्षः । " स्पशः " हिं सकान् " विसृज " । " अस्याविशः " मनुष्याः । यन्मयं " अदब्धः " अदाहकः " पायुः " रक्षकः । " भव " " नः " अस्मा कन् । " दूरे " अन्तिकेवा । " योघशंसः " पापमिच्छति । तं प्रतेस्पशोविसृज । हे " अग्ने " । ' ते ' तव । " किः "कश्चिदपि । " व्यथिः" व्यथादाता । " मादधर्षीत " नधृष्णियात । तूर्णिमन्युरिति क्रोधनाम ।

( उदग्न इति ) " अग्ने " " तिग्महेते " तीक्ष्णज्वाल । " उत्ति ष्ठ " " अमित्रान् प्रति " हेतीः, " आतनुष्व " प्रसारय । "अमित्रान्" " न्योषतात् " दह । "नः" अस्माकम् । " यः " " अरातिं " शत्रु त्वं "चक्रे " हे " समिधान " वर्धमानज्वाल । "शुष्कं" " अतसं " इन्धन सार्पमिव । " नीचा " न्यग्भूतं । "तन्धक्षि " दह ।

( ऊर्ध्वइति ) " अध्यस्मत् " अस्मत्तः । " ऊर्ध्वः " अस्माक मधिपतिर्भव । भूत्वाच शत्रून् " प्रतिविध्य " " दैव्यानि " तवरूपाणि । महात्म्यानि च दैव्यानि " स्थिरा " स्थिराणि । " तनुहि " सकृत्प्रकाश्यतिरोभावय । " यातु" यातूनि- रक्षांसि । हिंसावा । तत्र, "जूनां" वेगवताम् । " क्रिव्ववी " ति क्विप् । तेषां मध्ये । "जामिं" बन्दम् । " अजामिं " त्वरमाणवा । " शत्रून् " " प्रमृणीहि " मारय ।

अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषाꣳ सर्वभूतानां माता मेदिनी महती मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्या मृतेति वसिष्ठः ॥ (३६)

इत्येकविंशो ऽनुवाकः ।

---

यःपूर्व महतस्तमपिमहर । इतोऽभूमिति मोपेक्षिष्ठाः । यश्चान्यमहतः कुतश्चित्कारणात्, तमपिमहर । वराकोयं नहन्तव्यइतिचेतसिमाकृथाः । एवं इतमपि धावत्कृत्तु कामे होमः कार्यः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये विंशो ऽनुवाकः ॥ २० ॥

---

एवमुपासनप्रतिपक्षभूतानां रुद्राग्निरक्षः प्रभृतीनां प्रवचनेश्शान्तिकृत्वा अथानुकूलान्पृथिव्यादीनपि भक्तिवृद्ध्यर्थं प्रशंसन्ति ।

(अदितिरिति) तत्र पृथिवीतावत् स्तूयते । "अदितिः" अखण्डनीयस्वरूपा । दो अवखण्डने । सर्वात्यादिना इकारः । अत्रादितिशब्देन इक्षिमायपरपर्याया भूमिरुच्यते । "देवाः" द्योतनादिगुणयुक्ता इन्द्रादयः । "गन्धर्वाः" विश्वावसुप्रभृतयः । "मनुष्याः" ब्राह्मणादयः । "पितरः" अङ्गिरः प्रभृतयः । "असुराः" दैतेयाः । प्राधान्यात्तेषां ग्रहणम् । अन्येपि खगविहगोरगादयः, "तेषां" सर्वभूतानां सर्वेषांभूतानाम् । "माता" मातृवत्पोषयित्री । साक्षात्परम्परयावा अन्नादिरूपेण वर्धयित्री । "मेदिनी" स्नेहवती । धनधान्यादिभिः परिपूर्णावा । "महती" महापरि

आपोवाइदँसर्वं विश्वाभूतान्यापः प्राणावाआपः
पशवआपो मृतमापो न्नमापः स्सम्राडापो विराडापः

प्राणा " "मही" पूजिता । " सावित्री " सवितुस्सर्वैश्वर्यस्य स्वभूता । " गायत्री " सर्वैर्गातव्या । प्रशस्य सर्वावयवैस्संपूर्णेत्यर्थः । " जगती " भूगमविच्छेदेनगच्छन्ती, सर्वान् गमयन्तीवा । अनुपरत प्रभावा । " उर्वी " गौरवेण । " पृथ्वी " विस्तीर्णा । " बहुला " बहूनामर्थानां दात्री । " विश्वा " व्याप्तिमती । " भूता " महाभूतप्रधाना । भावयित्रीवा । " ककमा " एवं रूपेत्यशक्य निर्धारणस्वरूपा । "का" आपादिसर्वैः प्रष्टव्यस्वरूपेण प्रसिद्धा । " सा " तादृशी । " सती " सत्या । अविपर्यस्तस्वरूपा । इति शब्दः प्रधानार्थः । एवमादिभिरन्यैश्च गुणैस्सम्पूर्णाधात्री महीक्षमेत्यादि नामधेया " अमृता " मोक्षहेतुभूता । द्वितीयोयमिति शब्दोहेत्वौ । यस्मादियमेवंस्वभावा तस्मादियमेव पृथिवी उपास्येति । वसिष्ठः प्रशस्तः ब्रह्मज्ञानेन । वसिष्ठस्सवदति । तस्मादिमामेव भक्त्व्रक्तिवृध्यर्थ मुपास्महइति शेषः । " अदितिर्नउरुष्य " त्यादि सूक्त मत्र प्रमाणम् ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये एकविंशोऽनुवाकः ॥२१॥

---

अनन्तरमापस्तुयन्ते ( आपोवाइति ) " इदं " दृश्यमानं अप्रमाणंच । " सर्वं " " आपोवै " आपएव । तदधीनस्वरूपस्थितित्वात् । किं किमित्य पेक्षायाम् । " विश्वाभूतानि " देवतिर्यङ्मनुष्यस्थावरात्मकानि । "प्राणाः" चक्षुरादयः । " पशवः " द्विपादः चतुष्पादश्च । " अमृतं " देवभोग्यं हविरादिकम् । " अन्नं " मनुष्यादि भोज्यम् । " सम्राट् " संयक्-दीप्तिकं भगवत्प्रसादायत्तदीप्तिकं । अग्न्यादित्यादिकं । " विराट् "

रस्वराडप रछंदाँस्यापो ज्योती"ष्याप रसत्यमाप
रसर्वादेवताआपो भूर्भुवस्सुवराप ओं ॥ (३७)

इति द्वाविंशो ऽनुवाकः ।

अपः पुनंतुपृथिवीं पृथिवीपूतापुनातुमां, पुनंतु
ब्रह्मणस्पति र्ब्रह्मपूतापुनातुमां, यदुच्छिष्टमभोज्यं

विविधदीप्तिः । विद्युन्मेघेन्द्रधनुरादिकम् । " स्वराट् " स्वायत्तदीप्तिकं आत्मादिकं । " छन्दांसि " गायत्र्यादीनि । " ज्योतींषि " नक्षत्राराणि । " सत्यं " विकारादिदोषरहितं मुक्तात्मस्वरूपं । " सर्वादेवताः " " भूर्भुवस्सुवः " भूराद्यात्मकालोकाः । " आपः " " ओं " एवं भूता आपः परमात्मशरीरभूताइत्यर्थः । तथा ' यदं बुर्वैष्णवः काय ' इत्यादि ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये द्वाविंशोऽनुवाकः ॥ २२ ॥

एवमनःप्रशम्य तामिगात्मानं शोधयित्वा भगवतोनिवेदयति ( अ, प पुनन्त्विति ) ' स्नानकालेममाचाम ' दिति मन्त्रपूताचमनादिन याम: : त्र्यष्टिरिष्टपदा । द्वितीयवजमष्टाक्षराः पादाः । द्वयोर्द्वयोःपाद योर्विरामः । " आपः " " पुनन्तु " शोधयन्तु । " पृथिवीं " कारणेनकार्यशुद्धिः प्रार्थ्यते । साचाद्भिः " पूतापृथिवी " । " मां पुनातु " पुनरपितन्मुखेनात्मशुद्धिः प्रार्थ्यते । " ब्रह्मणस्पतिः " परिवृढस्य चेतनाचेतनात्मकस्यपाता पुरुषोत्तमः । ब्रह्मशब्देन वेदि कामन्त्राउच्यन्ते । सचेतच । पृथिवीं पृथिवीकार्यभूतं मम शरीरं "पुनन्तु"। साच शरीरात्मिका पृथिवी मां पुनातु । एवं शरीरशुद्धिमु खेनात्मशुद्धिरुक्ता । " यदुच्छिष्टं " यन्ममसम्बन्धि अशायस्यकरं उच्छिष्टादिभक्षण मप्रायत्यमलमूत्रोत्सर्जनपाषण्ड चण्डालोपस्पर्शना दिच । " अभोज्यं " केशकीटापन्नादि । " मम " सम्बन्धि ।

यद्वांदुश्चरितम्ममं, सर्वंपुनंतु मामापोऽसतांच प्रतिग्रहँस्वाहा ॥ १८ ॥

इति त्रयोविंशोऽनुवाकः ।



अग्निश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः, पापेभ्यो

" यद्वादुश्चरितं" शास्त्रनिषिद्धं प्रतिषिद्ध मैथुनादि, तन्निमित्तपापं । "मम" मदीयं । धर्मधर्मिणोरभेद उपचर्यते । यद्वा " मां " च मयापूर्वं सञ्चितंच । " पापं " " आपः " " पुनन्तु " " असतां " अपर स्पराङ्मुखानां शूद्राणांच । " प्रतिग्रहं " प्रतिग्रहनिमित्तचपापं । शोधयन्त्विति । एवं निर्धून पापशोधनं स्वरूपं परमात्मनि परमाहुतिवत् प्रक्षिपामि । एवं चात्मनिक्षेपं कृत्वा कृतार्थो भवामीतियावत् ।

इति श्रीकूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये त्रयोविंशो ऽनुवाकः ॥२३॥



पापसंशोधनार्थं स्वाय मपआचामति ( अग्निश्चेति ) अस्यमन्त्रस्य ऋषिमाऽस्सम । अकार्षं मनसेति सहाध्येतव्यं । तत्र प्रथमात्रिपदागायत्री । यदह्नायष्टाक्षरपंचपदापाङ्क्तिः । इदमहममिति विराट् ; द्विपदाख्याय त्रीवा । " अग्निः " अग्रणीः । अग्रनेता + करिष्यमाणानां पापादीनां कारयिता वारयिता च । प्रभुत्वात् प्रकरणाच्च पुरुषोत्तमउच्यते । " मन्युः " मननशीलमन्तःकरणमुच्यते । तद्धिसर्वप्रवृत्तिनिवृत्तिहेतुः । क्रोधइतिकेचित् । ' मनसोधिपतिः प्रजापतिः ' इतिश्रुतेः । " मन्युपतयः " क्रोधादिप्रवर्तकाः चक्षुरादयः प्राणाः । प्रजापतिप्रभृतयः सर्वेदेवावा । तेच । सर्वे । " मन्युकृतेभ्यः " कृतशब्दः कारणवाची । मन्युकारणेभ्यः । " पापेभ्यः " मां " रक्षन्तां "

रक्षंतां, यद्‌ह्ना पापमकार्षं मनसावाचांहस्ताभ्यां, पद्भ्यामुदरेणशिश्ना, अहस्तदवलुम्पतु, यत्किंचदुरितम्मयिं, इदमहम्माममृतयोनौ सत्येज्योतिषि जुहोमि स्वाहा ॥ (२९)

इति चतुर्विंशो ऽनुवाकः।

---

रक्षन्तु । यथा 'चोरेभ्योगृहंरक्षयता' मित्युक्ते चोराणामप्रवेशाय यतन्ते, तथेति । किंच "अह्ना" अतिक्रान्तेन । अपवर्गेतृतीया । अतिक्रान्तेह्नि । "यत्पापमकार्षं" कृतवानस्मि । "मनसा" प्रतिषिद्धचिन्तनादिकं । तथामनुः—'परद्रव्येष्वभिध्यान मनिष्टस्यच चिंतनं । वितथाभि निवेशश्च त्रिविधं कर्ममानसं' इति । यच्च "वाचा" परुषादिभाषणरूपं । तथा 'पारुष्यमनृतंचैव पैशुन्यंचैवसर्वशः । अनिबद्धप्रलापश्च वाङ्मयंस्याच्चतुर्विधं' इति । "हस्ताभ्यां" यच्चकृतं । अदत्तोपादानादिकं । तथा 'अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवाच शारीरंत्रिविधंस्मृत' मिति । "पद्भ्यां" यच्चकृतं । अनतिक्रमितव्यातिक्रमणादिकं । यच्च "उदरेण" अभोज्यभोजनादिकं । यच्च "शिश्ना" शिश्नेन । अगम्यागमनादिकं । 'सुपांसुलु' गित्याकारादेशः । एतैः करणैः यत्पापमकार्षं, तत्सर्वंपापं । तदेव "अहः" । "अवलुम्पतु" भेदयतु । नाशयत्वित्यर्थः । प्रतिपदंविहितेभ्योन्यदपि । "यत्किंचदुरितं" पापं । प्राचीनजन्मानिसंचितमिहजन्मनिकृतंवा । अथवा उक्तमनआदिभ्यातिरिक्तेन श्रोत्रादिनाकृतं अश्रवणीयश्रवणादि अविज्ञातहेतुकं यत्पापं मयितिष्ठति । "इदं" पापं । पापानांचकर्तारं । "मां" अमृत

सूर्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः, पापेभ्योरक्षंताम्, यद्रात्रिया पापमकार्षम मनसावाचा हस्ताभ्यां, पद्भ्यामुदरेणाशिश्ना, रात्रिस्तदवलुम्पतु, यत्किंचदुरितम्मयिं, इदमहम्मामममृतयोनौ सूर्ये ज्योतिषिजुहोमिस्वाहा ॥(४०)

इति पञ्चविंशोऽनुवाकः ।

---

योनौ " अमृतत्वस्यहेतुभूते । ' उतामृतत्वस्येशान ' इति श्रुते पुरुषोत्तमे । तस्यैव विशेषणं " सत्ये " अविपर्यस्त स्वरूपगुणविभवादिके । पुनः विशिनष्टि । " ज्योतिषि " नित्यज्वलिते । राज्यधिपतौ । " जुहोमि " यथासर्वाणि पापानि धूत्वा अमृतत्वं प्राप्नुयां, तथाअपःक्षिपामि । सुहुतंचेदमास्त्विति " स्वाहा " कारेणदर्शयति ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये चतुर्विंशोऽनुवाकः ॥२४॥

---

सूर्यश्चेत्यादि प्रातराचमनं । " सूर्यः " सुवतिस्यन्दतीति सूर्यः । आदित्यान्तरवस्थिते परस्मिन् ब्रह्मणि जुहोमि । अन्य त्सर्वं समानम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

आयातुवरदादेव्यक्षरंब्रह्मसाम्मितं, गायत्रींछन्द
सां मातेदंब्रह्मजुषस्वंनः, ओजोसि सहोसिबलमसि
भ्राजोसि देवानांधामनामासि विश्वमसिविश्वायुस्स
र्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि ॥(४१)

इति षड्विंशो ऽनुवाकः।

आयात्वित्यनुष्टुप् यजुरन्ता। गायत्र्या आह्वानेविनियुज्यते। "आयातु" आगच्छतु। "वरदा" वरणीयानामर्थानान्दात्री। "देवी" द्योतनवती। छन्दोभिमानिनीदेवता। इदानींमस्य क्षवदुच्यते। हे "देवि" "छन्दसां" गायत्र्यादीनां। "माता" योनिभूता। त्वमागत्यास्मदीयं। "ब्रह्म" मन्त्रं। प्रणवव्याहृतिसावित्र्यात्मकं। "अक्षरं"नक्षरतीत्यक्षरं। "ब्रह्म सम्मितं" स्ववाच्यभूतपरब्रह्मसदृक्षं। "गायत्रीं" सगायत्रीशिरस्कां। "जुषस्व" सेवस्व। कस्मादेवमुच्यतइत्यत्राह "ओजोसि" देहशोधनहेतुरसि। "सहोसि" सहन समर्थमसि। "बलमसि" धारणसमर्थमसि। "भ्राजोसि" दीप्तिरसि। "देवानांधामासि" कीदृशंधाम? "नाम" नमनं - वशीकरणमसि। किंबहुना। "विश्वमसि" सर्वं जगदसि। "विश्वायुः" विश्वस्यायुः जीवितमसि। "सर्वमसि" सर्वप्रकारं श्रेयस्त्वमसि। "सर्वायुः" सर्वप्रकारस्यायुषोहेतुरसि। "अभिभूः" शत्रूणामभिभवित्र्यसि। "ओं" परमात्मशेषभूतासि। तादृशीं "गायत्रीं" त्वां। "आवाहयामि" ममसमीपंप्रापयामि।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये षड्विंशोऽनुवाकः ॥२६॥

ओं भूः, ओं भुवः, ओं सुवः, ओं महः, ओं जनः, ओं तपः, ओं सत्यं, ओंतथ्सवितुर्वरेण्यंभर्गो देवस्यंधीमहि, धियोयोनःप्रचोदयात् , ओमापो ज्योतीरसोमृतंब्रह्मभूर्भुवस्सुवरों ॥(४२)

इति श्रीकूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये सप्तविंशो ऽनुवाकः ॥ २७॥

---

ओं भूरित्यादि प्रणवव्याहृति शिरोभिस्सहिता गायत्री प्राणायामे विनियुज्यते । "सव्याहृतिं सप्रणवांगायत्रीं शिरसासह । त्रिः पठेदायत प्राणःप्राणायाम स्सउच्यते" इति । ब्रह्मऋषिः प्रणवस्य, देवीगायत्रीछन्दः, "दैव्येक"मितिवचनात् । परमात्मावाच्यादेवता ; व्याहृतीनां व्याहृतांप्रजा पतिः पुरुषोत्तमऋषिः । गायत्र्युष्णिगनुष्टुप् बृहतीपङ्क्तित्रिष्टुप् जगत्य श्छन्दांसि, अग्निवाय्वर्क वागीशवरुणेन्द्र विश्वदेवादेवताः लोकवाच्य इशा । अन्यथा तु ब्रह्मपरत्वे परमात्मादेवता । सावित्र्या विश्वामित्रार्षेया । निचृद् गायत्रीछन्दः, एकाक्षरन्यूनत्वात् । तदुक्तं " ऊनाधिकेनैकेन निचृ (चृ) द्भूरिजा" विति । आदित्यान्तरस्थःपरमात्मादेवता । ओमाप इत्यादि । शिरइवशिरः । उपरिस्थितत्वात् । एतदपिपरमेष्ठिन आर्षेयम् । धातु रनुष्टुप्, षोडशाक्षरत्वात् । ब्रह्माग्निवायुसूर्यादेवता । तदन्त रात्मा परंब्रह्मदेवतेति त्र्यय्यन्तविदः । एतन्माहात्म्यं " प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु । त्रिपदायां तु गायत्र्यां नभयं विद्यते क्वचित् " इति । प्रायश्चित्ते च विनियुज्यन्ते "सव्याहृतिका स्सप्रणवाः प्राणायामास्तु षोडश । अपिभ्रूणहनं मासा त्पुनन्त्य हरहः कृताः " इति । तत्र प्रणवेन जीवपरयोस्सम्बन्धः प्रतिपा

वते । " ब्रह्मणेत्वामहस ओमित्यात्मानं युञ्जीते " ति । तथा श्रुति रेवनिर्वक्ति, "प्राणान् सर्वान् परमात्मनि आयमयति नामयति तस्मा दुच्यते प्राणायाम " इति । स्मृतिरपि " ओमित्येकाक्षरं ब्रह्म व्या हरन् मामनुस्मरन् । यः प्रयातिसमद्भावं यातिनास्त्यत्र संशयः " इति । श्रीहरिवंशे वैदिकपुत्रानयने भगवान्- " प्रणवाख्यंमहाबाहो विद्धिमां जगतीपते । इमं जपन् महाबाहो मां नमस्कुरुसत्तम ॥ ततोमांवेत्स्यसे सम्यक् सत्यमेवशपामिते । अन्यत्सर्वंमहाबाहो विहायैतत् परोभव ॥ इदमेवपरंश्रेयो नान्यकार्याविचारणे " ति । वैष्णवेपुराणे च-"ओंकारो भगवान्विष्णु स्त्रियामावचसांपतिः । तदुच्चारणतस्तेस्तु विनाशंयान्ति राक्षसाः ॥ वैष्णवांशः परस्सूर्यो योन्तर्ज्योतिरसंशयः । अभिधायक ओंकारं तस्यतत्प्रेरकंपरम् । तेनतत्प्रेरितंज्योति रोंकारेणायदीपितं ॥ दहत्यशेषरक्षांसि देहाख्यानिच्चतत्रवे " इति । तस्यवर्णत्रयात्मत्वमपि श्रुतयोवदन्ति " अकार उकार मकार इति, तानेकधासमभव त्तदोतदो " मिति । " यद्वेदादोस्वरः प्रोक्तोवेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्ययः परस्समहेश्वरः " इत्यकारवाच्यत्वमपि भगवत आम्ना तम् । मनुरपि-" अकारञ्चाप्युकारंच मकारंच प्रजापतिः । वेदत्रया न्निरबृह " दिति । " आद्यन्तु त्र्यक्षरं ब्रह्म त्रयीयत्रप्रतिष्ठिता । सगुह्योन्यस्त्रिवृद्वेदो यस्तंवेदसवेदवित् " इतिच । अ इति ब्रह्म । 'अक्षराणा मकारोस्मी ' त्यादिभिः प्रणवस्य भगवच्छब्दवाच्यत्वम्, तत्प्रकृतिना मकारेण भगवतश्शेषित्वप्रतिपादनं च श्रुतिस्मृतीभिर्दर्शितम् । तथा च पाणिनि निरुक्तिः । ' अवतेष्टिलपश्चे ' त्यवतेर्मनिनि अकारलोपे ऊठि कृते ओमितिरूपंभवति । 'अ इति भगवतोनारायणस्य प्रथमाभिधान मभिदधता किन्नाममंगळं नकृत ' मिति । समीक्षायामित्यं भगवतश्शेषित्व प्रतिपादनं च प्रणवस्यार्थः । तथा च प्रणवविवरणेपि भगवान् शाण्डिल्यः " स्वोजीवनेच्छायदितेस्वसत्तायां स्पृहायदि । आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदास्मर ॥ स्वात्ममात्मनिसञ्जातं स्वामित्वंब्रह्मणि स्थितम्

उभयोरपि सम्बन्धोनप्तोऽभिमतोमम ॥ पारतन्त्र्यंपरेपुंसि प्राप्यनिर्गत-बन्धनः । स्वातन्त्र्यमतुळंप्राप्य मोदतेदिविदेववत " इति ।

व्याहृतयोव्याख्यायन्ते । आदौ जगत सिसृक्षुः सर्वेश्वरः पुरुषोत्तमः प्रजानामुत्पत्तये विवृद्धये च तासां सद्भावादिकं अभिसन्धाय सप्तकृत्वोव्याहरत, तव्याहृतयो भूराद्या स्सप्तलोकास्सम्बभूवुः । भवन्त्यस्यां सर्वाणिभूतनीति "भूः" सर्वप्रजाश्रयभूता इयं । "ओं" भवच्छेषभूतेत्यर्थः । शीतोष्णवृष्ट्युदक तेजांसि अमुष्माद्भवन्तीति "भुवः" स्वर्गनरकादि भोगक्षयकर्मशेषेण जन्तवः सूक्ष्मदेहपरिग्रहेण भवन्त्यस्यामितिवा "भुवः" एवं भूतं भुवर्लोकाख्यं अन्तरिक्षं । "ओं" तदीय मित्यर्थः । असुन्प्रत्ययन्तः, छान्दसोगुणाभावः । 'ञ्नित्यादि र्नित्य' मित्यादिस्वरितत्वं । सुष्टुप्राप्यते सुकृतिभिरिति "सुवः" सुपूर्वा दर्तेर्विच् । उवङ् । "ओं" सुवः नच्छेषइति । अथवा सुष्टु रक्ष्यन्तेस्मिन् भूतानीति 'सुवः' भवतेरूपं । एतेभ्यस्त्रिभ्योलोकेभ्योमहत्तमो "महः" महयतिपूजयति विश्वमितिवा, महीयन्ते पूज्यन्ते अनेनेतिवामहः । "ओं" महर्लोकोपि तथा । प्रळोनाजन्तवस्तस्मिन् प्रथमंजायन्तइति "जनः" "ओं" सोपि तथा । सनत्कुमारादयो योगींद्रा अस्मिन् महत्तपस्तप्यन्तइति "तपः" "ओं" तदप्येवं । अवान्तरप्रळयादा सविपर्यस्तस्वभावानां सौम्यवृत्तानां दुहिणादीनां स्थानं "सत्यं" "ओं" तदपि भवत्येषामित्यर्थः । एव मेवास्सप्तव्याहृतयः सम्पन्नाः । " सर्वेभ्यो भूतेभ्योन्तरोयं सर्वाणि भूतानि नविदुः यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूतान्यन्तरोयमय त्येषतआत्मान्तर्याम्यमृतः" " एषसर्वभूतान्तरात्मा पहतपाप्मादिव्योदेव एकोनारायण " इत्यस्मिन् प्रकरणे भूरादिकस्य सर्वस्य लोकस्य सर्वस्य तावस्य प्रत्येकं सामस्त्येनभगवन्नियाम्यत्वं भगवद्व्याप्यत्वं भगवच्छरीरत्वं भगवदात्मकत्वं भगवच्छेषत्वं इत्यादि सर्वं सुप्रसिद्ध

ष्ठति"। एतदुपबृंहणानि बहूनीतिहासपुराणवाक्यानि द्रष्टव्यानि । "नतदस्तिविनायत्स्यान्मयाभूतं चराचरम्" "येचैवसात्विकाभावा राजसास्तामसाश्चये । मत्तएवेतितान्विद्धि नत्वहन्तेषुतेमयि ॥ त्रिभिर्गुणमयैर्भावै रेभिस्सर्वमिदं जगत् । मोहितंनाभिजानाति मामेभ्यः परमव्ययम्" "कृष्णएवहिलोकानां उत्पत्तिरपिचाप्ययः" "कृष्णस्यतु कृतेभूत मिदंविश्वं चराचरम्" "आत्माराज्यंधर्मोमित्रं [चैव] कळत्रंवाहना नानिच । एतत् भगवतेसर्वम्" "राज्यंचाहंचरामस्य धर्मंवक्तु मिहार्हसि" इति ।

एवं सर्वकारणस्य सर्वरक्षकस्य सर्वधारकस्य सर्वशरीरस्य सर्वात्मनः सर्वनियन्तुः सर्वशेषिणः सर्वकल्याणगुणाकरस्य सर्वविरोधि विध्वंसकस्य सर्वज्ञस्य सर्वशक्तेः सर्वप्राप्यस्य सर्वप्रापकस्य पुरुषो त्तमस्य उपास्यत्वं सावित्र्याप्रतिपाद्यते। "नः" अस्माकं भगवदुपास कानाम् । "धियः" बुद्धीः । प्रवृत्तीः । अन्तरात्मतयास्थित्वा नियामकम् । "भर्गः" धाम । "प्रचोदयात्" प्रचोदयति । नियमयति । किं विशिष्टम् । "वरेण्यं" सर्वप्रार्थनीयम् । दारिद्र्य शरीरेन्द्रियवैकल्य संसारदुःखविनाशायात्मन श्रेयस्कामैर्मनुष्यै र्वरणीय मित्यर्थः । नकेवलं मनुष्यादीनां, किंतु, आलोकादिदानेन सर्वलोक प्रसवितुर्देवस्यापि वरणीयम् । तथा "सूर्यस्यापिभवेत् सूर्यः अग्ने रग्निः क्षमा क्षमा" "एतस्य वा अक्षरस्य प्रशासनेगार्गि सूर्याचन्द्र मसौ विधृतौतिष्ठतः" "सूर्याचन्द्रमसौ धातायथा पूर्वमकल्पयत" "अथ य एषोन्तरादित्येहिरण्मयः पुरुषोदृश्यते" "अन्तरादित्येमनसा चरन्तं" "अन्तश्चन्द्रमसिमनसाचरन्तं" "सहैवसन्तन्नविजानन्ति देवाः" "यस्यादित्योभामुपयुज्यभाति" "येनसूर्यस्तपतितेजसेद्धः" "अङ्गान्यन्यादेवताः" इत्यादि श्रुतिस्मृतिभिरादित्यस्यापि भगवच्छे षत्वं भगवन्नियाम्यत्वं च दर्शयति । अन्तर्यामि ब्राह्मणे "यआदित्ये तिष्ठन्नादित्यादन्तर" इत्यादि । इत्यस्मिन्प्रकरणे सर्वेषां देवानां

सर्वेषां लोकानां सर्वेषां भूतानांच नारायणनियाम्यत्वं सुस्पष्टमुपपादितं ।
एवं भूतं तत "भर्गः" भ्राजिष्णु, सर्वभर्तृ, गमयितृ, विष्ण्वाख्यंतेजः,
सर्वशरीरान्तःप्रवेशेपि तद्गत सकलदोषाननुषंगेणसकलंकाळं स्वयमेवदी
प्यमानंधाम । "तत" सर्वजनानां रक्षक मन्वेषमाणानां मुमुक्षुं
स्थं तेजः । निरुपाधिक तच्छब्दो भगवद्वाचकत्वेनस्मृतः
"ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः" इति । सर्वं
ततवजातन्तनोतीति तत् । तथा "यत्तत्पदमनुत्तम" मिति श्रीमन्नाम
सहस्राध्याये । "तदितिवाएतस्य महतोभूतस्य नाम भवति, योस्ये
तन्नामवेद" इति । तद्भर्गः । वैष्णवंधाम । "धीमहि" ध्यायेमहि ।
उपास्महे इति यावत । मैत्रायणीयोपनिषदि "एतद्वादित्यस्यमध्ये उद्
त्वामयूखे भगवतएतत् सवितुर्वरेण्यं सत्यधर्म एतद्यजुरेतत्तप" इत्यादि
"तच्छान्तमभय मानन्दस्तमास्यरमचलममृतं ? विष्णुसंज्ञं सर्वांत्रारंधाम
तदेवनुपासीते" त्यादिकं बहुशआम्नातम् । "सयश्चायं पुरुषे, यश्चा
सावादित्ये, स एकः सयएवंवि" दित्यादि । सावित्रीकल्पे "सवितु
स्तद्वरेण्यं तु सत्यधर्माण मीश्वरम् । हिरण्यवर्णं पुरुषं व्योमतद्विष्णु
संज्ञितं" इति । अत्र सर्वत्र व्योमशब्देन व्योमवन्निर्मलत्वेन हेय
प्रतिभटतोच्यते । योगयाज्ञवल्क्यः, "ईश्वरंपुरुषाख्यन्तु सत्यधर्माण
मच्युतम् । विष्ण्वाख्यंविष्णुसंज्ञन्तु ज्ञात्वामृतमुपाश्नुते" इति । मार्क
ण्डेयनारसिंहपुराणयोः- "ध्येयस्सदा....धृतशंखचक्रः" इति । नारा
यणस्यैवध्येयत्वंश्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धम् । याज्ञिकीयुप
निषत्सु "दहरंविपाप्मं" इत्यादिभि रुपासनविधिंश्च उपदिश्य, नारा
यणानुवाके "पतिंविश्वस्यात्मेश्वर" मित्यादिभि र्नारायणस्वरूपगुण
विभूतिमःहात्म्यादिकं प्रतिपाद्य तस्यैवोपास्यत्वं इतरस्य विरंचिशतम-
खादेरनुपास्यत्वं चोक्तम् । एतेनानुवाकेन सर्वोपनिषत्सु ध्येयतत्वं
नारायणइति च सुस्पष्टमुक्तम् । महाभारताद्यनेकपुराणेषु एतदुप
बृंहणम् । "आलोड्यसर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं

मुत्पन्नं ध्येयोनारायणस्सदा " इति । तत्र मनुः- " मशास्तिता- सर्वेषा " मित्यादि । पैठीनसिस्मृतौ । " कलिपापप्रसक्तोपि ध्याये न्निमिषमच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः " इति यम शंखयोः " स्वदेहमरणिंकृत्वा प्रणवंचोत्तरारणिम् । ध्याननिर्मथना भ्यासात विष्णुंपश्येद्धृदिस्थितं " इति । शंखः " उक्त्वासूर्यमुपस्थाय प्राणानायम्यचासने । गायत्र्यष्टशतंजप्त्वा ध्यायेन्नारायणं परं " इति । दक्षस्मृतौ- " ध्यायेन्नारायणन्देवं स्नानादिषु च कर्मसु । ब्रह्मलोक मवाप्नोति नचेहाजायतेपुनः " इति । आत्रेस्मृतौ " प्राणायामसह स्रेण यत्पापंनश्यते चिरात् । क्षणमात्रेणतत्सर्वं हरेर्ध्यानात्प्रणश्यति " इति । श्रीवैष्णवेपुराणे- प्रायश्चित्तप्रकरणे "प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानिवै । यानितेषामशेषाणां कृष्णानुस्मरणं परं " इत्यादि । श्रीहरिवंशे " हरिरेकस्सदाध्येयो भवद्भिस्सत्त्वसंस्थितैः । ओमित्येवं सदाविप्रा बुध्यध्वंध्यातकेशवं " इत्यादि सर्वत्र द्रष्टव्यम् । श्रीम द्रामायणे " प्राणायामेनपुरुषं ध्यायमानाजनार्दनं " " ध्यायन्नारायणं देवं स्वास्तीर्णेकुशसंस्तरे । वाग्यतस्सहवैदेह्या भूत्वानियतमानसः " इति । पुण्डरीकनारदसंवादे- " किं तस्यदानैः किंतीर्थैः किंतपोभिः किमध्वरैः । योनित्यंध्यायतेदेवं नारायणमनन्यधीः " इति । अपि च शुभाश्रयप्रकरणेषु ब्रह्मादीनांकर्मवश्यत्वं ध्यानानुपयोगित्वं च बहुषु प्रदेशेषु उद्घुष्यते । वैष्णवेधर्मे- " आब्रह्मस्तम्बपर्यन्ता " इत्यादि वाराहे- " सर्वेदेवास्सपितरो ब्रह्माद्याश्चाण्डमध्यगाः । विष्णोस्सका शादुत्पन्ना इतीयं वैदिकीश्रुतिः " इति । मनुरपि ब्रह्मादीनामपि गुण वश्यत्वंवदति " तापसायतयोविप्रा येचवैमानिकागणाः । नक्षत्राणि च दैत्याश्च प्रथमासात्त्विकीगतिः॥ यज्वानऋषयोदेवा वेदाज्योतींषिवत्सराः । पितरश्चैवसाध्याश्च द्वितीयासात्त्विकीगतिः ॥ ब्रह्माविश्वसृजोधर्मो महा नव्यक्तमेव च । उत्तमां सात्त्विकी मेतां गतिमाहुर्मनीषिणः ॥ त्रित्रिश्च त्रिविधःकृत्स्न एषसर्वस्समुद्दिष्ट स्त्रिप्रकारस्यकर्मणः ।

संसार स्सार्वभौतिकः॥" इत्यादिभि र्नवविधास्संसारिणः प्रोक्ताः। तेषांच फलं दर्शितं "देवत्वंसात्विकायान्ति मनुष्यत्वञ्च राजसाः। तिर्यक्त्वं तामसानित्य मित्येषां त्रिविधागतिः" इति। वैष्णवपुराणे ब्रह्मादीनां शुभाश्रयत्वं प्रतिषेधति "अन्येतु पुरुषव्याघ्र चेतसोये व्यपाश्रयाः। अशुद्धास्तेसमस्तास्तु देवाद्याः कर्मयोनय" इति।

ओमाप इत्यादिकं शिरोव्याख्यायते। शिरश्शिरः। प्राणानां चक्षुरादीनां यथा शिरः, तद्वदिदमपि सर्वसत्व समाश्रयणाच्छिरइति। "ओमापः" सर्वव्याप्य धारणपोषणादिभिः सर्वोपकारिण्य आपः। "ओं" भगवच्छेषभूताइत्यर्थः। "यदम्बुवैष्णवः कायः" "आपो नारा इति प्रोक्ता आपोवैनरसूनवः। तायदस्याप्नंप्रोक्तं तेननारा यणस्मृतः" इति। "ओं" "ज्योति" श्च तच्छेषमित्यर्थः। तथा "योग्नौतिष्ठन् योग्नेरंतर" इत्यादि। अग्निशब्दस्योपलक्षणत्वात्। वाय्वादीनामप्यत्र सङ्ग्रहः कार्यः। "रसः" रसोपितच्छेषइति। रसशब्द स्सर्वेषां गुणानामुपलक्षकः। शब्दादयस्सर्वे तच्छेषाः। "अमृतं" देव भोज्यं परमरसोपि तदीयः। "ब्रह्म" प्रकृत्यादिकमपि सर्वम्। "ओं" तदीय मित्यर्थः। "भूर्भुवस्सुवरों"-समस्तानां भूरादीनां सप्तानामपि लोकानां तदीयत्वमुक्तं भवतीत्यर्थः। यथा च स्मृतिः "ओंकारपूर्विका स्तिस्रो महाव्याहृतयस्तथा। सावित्रीं शिरसासार्धं जपत्वापापैः प्रमु च्यत" इति। प्रणवव्याहृति सावित्रीजपे- "एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्। सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येनयुज्यते" "सहस्र कृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः। महतोप्येनसोमासा त्त्वचेवाहि र्विमुच्यत" इत्यादीनि बहुवचनानि द्रष्टव्यानि।

इति श्रीकूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये समाविंशोऽनुवाकः ॥ २७ ॥

---

ओंभूर्भुवस्सुवर्महर्जनस्तपस्सत्यं तद्ब्रह्मतदापआ
पो ज्योतीरसो ऽमृतंब्रह्मभूर्भुवस्सुवरोम ॥ (४३)

इति अष्टाविंशो ऽनुवाकः ।

ओंतद्ब्रह्म, ओंतद्वायुः, ओंतदात्मा, ओंतथ्सर्वं,
ओंतत्पुरोर्नमः ॥ (४४)

इति एकोनत्रिंशोऽनुवाकः ।

उक्तमेवार्थं पुनरपि स्थूणानिखनन्यायेन अनन्तरेणानुवाकेन द्रढ्यति । अयमप्यनुवाकः प्राणायामे विकल्प्यते (ओंभूर्भुवस्सुव रित्यादि) उक्तएवार्थः ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये अष्टाविंशोऽनुवाकः॥२८॥

ओं तत् ब्रह्मेत्यादिकोनन्तरोप्यनुवाकः प्राणायामेविकल्प्यते । अनेन प्रणवस्स्तूयते । "ओंतत" सकलचेतनाचेतन शेषिभूत स्सर्वजग त्कारणं परंब्रह्म । "ओं" प्रणवात्मकम् । प्रणववाच्यंवेत्यर्थः । "ओं तद्वायुः" ब्रह्मात्मकं वायुरपि प्रणवात्मकम् । प्रणवाधीन स्व-रूपस्थिति प्रवृत्तिकमित्यर्थः । वायुशब्द स्सर्वदेवतानामुपलक्षकः । देवता जातं सर्वं प्रणवाधीनमिति । "ओं तदात्मा" ब्रह्मकार्योयं जीवात्मा सोपि प्रणवाधीनः । किं बहुनोक्तेन । "ओं तत्सर्वं" ब्रह्मात्मकं सर्वं प्रणवाधीनमिति यावत् । "ओं तत्पुरोर्नमः" तदेव प्रणवशब्दवाच्यं प्रणवः । "पुरोः" पुरुः पूर्वम् । सर्वकारणानामपि कारणम् । तस्मै प्रणवाय प्रणवशब्दवाच्याय वा ब्रह्मणेनमः । उपासकोहमपि शेषभूतइत्यर्थः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये एकोनत्रिंशोऽनुवाकः ॥ २९ ॥

उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि, ब्राह्मणे भ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम ॥ (४५)

इति त्रिंशो ऽनुवाकः ।



ओमंतश्चरति भूतेषु गुहायां विश्वमूर्तिष, त्वंयज्ञ

" उत्तमेशिखरे " इत्यनुष्टुप् । सावित्र्या उत्सर्जने विनियुक्ता । " भूम्यां " अस्यां सर्वभूतधात्र्याम् । यः पर्वतः मेर्वाख्यः, तस्या आधारभूतः, तस्य मूर्धनि " पर्वतमूर्धनि " तत्रापि " उत्तमेशिखरे " " देवी " गायत्र्यधिदेवते " " देवी " देवनशीला । क्रीडापरा त्वम् । " ब्राह्मणेभ्योऽभ्यनुज्ञानं " ब्राह्मणै भगवदुपासनपरैरस्माभि रनुज्ञानम् । कर्मणि ल्युट् । " यथासुखं गच्छ " यत्रगताया सुखं भवति तत्रगच्छ । ब्राह्मणेभ्य इति " सुप्तं विभक्त्यर्थेषु चतुर्थीवक्तव्ये " ति तृतीयार्थे चतुर्थी । तादर्थ्येवाचतुर्थी । ब्राह्मणार्थमेवगच्छ । पुनरपि ब्राह्मणसकाशमागन्तुं उत्तमस्थानंगत्वा तत्रैवतिष्ठ ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये त्रिंशोऽनुवाकः ॥३०॥



( ओमन्तरिति ) आस्तारपङ्क्तिः प्रणववाच्य परब्रह्मोपासनेविनियुक्ता । " ओं " ओंकारवाच्यं सर्वशेषिभूतं परंतत्वं पुरुषोत्तमाख्यम् । तत् । " सर्वेषु " " अन्तः " मध्ये " गुहायां " हृदयाकाशे " चरति " परमात्मतयावतिष्ठते । तदेव प्रत्यक्षयित्वाह । ( त्वं यज्ञ इति ) जगद्रक्षकोयज्ञस्त्वमेवातिष्ठसि । " त्वं विष्णुः "

"स्त्वंविष्णु स्त्वंवषट्कार स्त्वँरुद्र स्त्वंब्रह्मा त्वंप्रजापतिः ॥ (४६)

इति एकत्रिंशो ऽनुवाकः ।

अमृतोपस्तरणमसि ॥ (४७)

इति द्वात्रिंशोऽनुवाकः ।

त्रिमूर्तिमध्यस्थो जगत्स्थितिहेत्वर्थं विष्णुत्वेनावतीर्णस्त्वमसि । "त्वं वषट्कारः" सर्वं तत्वजातं व्याप्यान्तस्स्थित्वा वशं स्वेच्छानुवर्ति करोतीति। करोतेः कर्मण्यण्। "प्रच्छिद्र्वशी" त्यादिना अट् प्रत्ययोवशेष्वादेशश्च । "त्वंरुद्रः" जगदुपसंहारकोरुद्रः। रुद्रात्मात्वमसि। "ब्रह्मा" हिरण्यगर्भः। तदात्मकोसि । "प्रजापतिः" मरीच्यादिकः, तदात्मकश्च भवसि ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये एकत्रिंशो ऽनुवाकः ॥ ३१ ॥

(अमृतोपस्तरणमसी) त्यनेन मन्त्रेण त्वयाजितोन्नस्य पात्र उपस्तरणं क्रियते । अन्नस्य हविषः, तदाधारस्य उदरस्य शुद्धिरनेन क्रियते । हे उदक ! "अमृतोपस्तरणं" अमृतस्य अन्नस्य उपस्तरणमास्तरणमसि । यद्वा, यत्रामृतमन्नं ब्रह्मवसति । तदास्तरणमसि ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये द्वात्रिंशो ऽनुवाकः ॥ ३२ ॥

प्राणेनिविंष्टोमृतंजुहोमि, प्राणायस्वाहा, अपाने निविष्टोमृतंजुहोमि, अपानायस्वाहा, व्यानेनिविं ष्टोमृतंजुहोमि, व्यानायस्वाहा, उदानेनिविंष्टोमृतं जुहोमि, उदानायस्वाहा, समानेनिविंष्टोमृतंजुहोमि, समानायस्वाहा । ब्रह्मणिमेआत्मामृतत्वाय ॥(४८)

इति त्रयस्त्रिंशो ऽनुवाकः ।

प्राणोनिविंष्टोमृतंजुहोमि शिवोमाविशाप्रदाहाय

तथात्मयाजिनः प्राणाहुतिमन्त्राः ( प्राणेनिविष्ट इत्याद्याः ) " प्राणे निविष्टः " अभि निविष्टः । तत्स्थित्यर्थं, " अमृतं जुहोमि " अमृता त्मकमन्नं जुहोमि । आत्मज्योतिषि प्रक्षिपामि । " प्राणायस्वाहा " प्राणाधिदेवतायै परब्रह्मणे स्वाहा । सुहुतञ्चेदं हविरस्तु । एवमपा नादिषु योज्यम् । तत्र प्राणऊर्ध्ववृत्ति र्मुखनासिकानिस्सरणः । अपा नोधोवृत्ति र्व्यानस्तिरश्चीनवृत्तिः । उदानश्शब्दकारी । समानस्सर्वे ष्वशितपीतादेस्समीकर्ता । " ब्रह्मणिम आत्मामृतत्वाय " भवत्विति शेषः । अनेनान्नेनपोषितो ममात्मा शरीरं ब्रह्मण्यवस्थितं भवतु तदनुगुणं तिष्ठत्विति यावत् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये त्रयस्त्रिंशोऽनुवाकः॥३३॥

प्राणेनिविष्ट इति पूर्वेण विकल्प्यते । व्याख्यातप्रायः । विशेषस्तु वक्ष्यते । " शिवोमाविशाप्रदाहाय " इ मन्त्र । ' शिव." जगतोनु

प्राणायस्वाहा, अपानेनिविष्टोऽमृतंजुहोमि शिवो माविशाप्रदाहायापानायस्वाहा, व्यानेनिविष्टो मृतंजुहोमि शिवोमाविशाप्रदाहाय व्यानायस्वाहा, उदानेनिविष्टोऽमृतंजुहोमि शिवोमाविशाप्रदाहायोदानायस्वाहा, समानेनिविष्टोऽमृतंजुहोमि शिवोमाविशाप्रदाहाय समानायस्वाहा, ब्रह्मणिम आत्मामृतत्वाय ॥ (४९)

इति चतुस्त्रिंशोऽनुवाकः ।

---

अमृतापिधानमसि ॥ (५०)

इति पञ्चत्रिंशोऽनुवाकः ।

---

प्रहृष्टभूत्वा । "मा" माम् । "विश" किमर्थम् ? "अप्रदाहाय" अदाहार्थम् । इतरथाजठारवहिश्शरीरं दहेत । गतमन्यत् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्भाष्ये नारायणीये चतुस्त्रिंशोऽनुवाकः ॥३४॥

---

"अमृतापिधानमसी" त्यपिधानं । हेउदक ! त्वं । "अमृतस्य" "अपिधानं" छादनं । येनामृतं पिधीयते; तत् त्वमसि ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्भाष्ये नारायणीये पञ्चत्रिंशोऽनुवाकः ॥३५॥

श्रद्धायांप्राणेनिविंश्यामृतँहुतं प्राणमन्नेनाप्याय स्व, अपानेनिविंश्यामृतँहुत मपानमन्नेनाप्यायस्व, व्यानेनिविंश्यामृतँहुतं व्यानमन्नेनाप्यायस्व, उदानेनिविंश्यामृतँहुतमुदानमन्नेनाप्यायस्व, समानेनिविंश्यामृतँहुतँ समानमन्नेनाप्यायस्व, ब्रह्मणिमआत्मामृतत्वाय ॥ (५१)

इतिषट्त्रिंशोऽनुवाकः ।

---

प्राणानां ग्रन्थिरसि रुद्रोमाविशांतकस्तेनान्नेनाप्यायस्व ॥ (५१)

इतिसप्तत्रिंशोऽनुवाकः ।

---

(श्रद्धायामिति) हुताभिमन्त्रणमन्त्रः । व्याख्यातप्रायः । "श्रद्धायां" सत्यामिवश्रद्धावतामया "प्राणेनिविश्य" तस्मिन्नर्थे "अमृतंहुतं" अमृतात्मकमन्नं हुतं । तेन "अन्नेनप्राणमाप्यायस्व" श्रद्धायामित्यपानादिष्वप्यनुषज्यते ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये षट्त्रिंशोनुऽनुवाकः ॥ ३६ ॥

---

(प्राणानामिति) हृदयाभिमर्शनमन्त्रः । हेजाठराग्ने! जाठराग्निप्रतिवचनमिदं । त्वं मे प्राणादीननेनान्नेन पोषयेति । यद्वा अन्नप्रत्ययवचनं । हुतंत्वं, अन्नेनस्वरूपेण प्राणाद्यधि देवता परंब्रह्म तर्पयेति । "प्राणानांग्रन्थिरसि" प्राणायेनगृह्यन्ते- निबध्यन्तस्त्वाप्यन्ते, सत्वमसि । भुक्तेन्नाविके त्वयाजीर्णे

अंगुष्ठमात्रः पुरुषोंगुष्ठञ्चसमाश्रितः, ईशस्सर्वस्य
जगतः प्रभुः प्रीणातिविश्वभुक् ॥ (५३)

इति अष्टत्रिंशोऽनुवाकः ।

---

प्राणादयस्तिष्ठन्ति, तस्मात् त्वं । " रुद्रः " रोदयिता । क्रोधनः। "अंतकः" भुक्तानां जरयिताभूत्वा, " मा " मां । " आविश " स्वमाविश्य भवता सुपक्वेन । " अन्नेन " ममशरीरं । " आप्यायस्व " वर्धयस्व । त्वयावर्द्धितशरीरोहं भगवन्तमुपासइति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥

---

दक्षिणांगुष्ठं हृदयेस्थापयति ( अंगुष्ठमात्रइत्यादि ) उपासकानुग्रहाय सर्वेश्वरोंगुष्ठपरिमाणो भूत्वा तत्परिमाणेहृदये वर्तते सउपास्य इति श्रुत्यन्तरसिद्ध इहोपास्यते । सौशील्यादिगुणैः " अंगुष्ठमात्रः " अंगुष्ठप्रमाणोभूत्वा । " अंगुष्ठं " अंगुष्ठपरिमाणं हृदयाकाशं । " समाश्रितः " भजमानः । " ईशस्सर्वस्यजगतः " सर्वस्य प्राणिजातस्य नियन्ता। "प्रभुः" । स्वामीच "विश्वभुक्" सर्वं भोक्ता। एवंविधस्सपुरुषोत्तमः । " प्रीणाति " प्रीणातु, स्वयम्प्रीतो मां पुष्णात्वितियावत : दक्षिणपदांगुष्ठे ऊर्ध्वदक्षिणहस्तेन जलं स्रावयत्यनेनेतिकंचित् । तत्र । " अंगुष्ठंच समाश्रितः " यत्रोदकं स्रावयति सर्वाधस्तात्कालाग्न्यात्मतया वर्ततेभगवान् , सएवह्युत्थितः कल्पान्ते विश्वन्दहति । एवं देहाधः सर्वमूलेंगुष्ठेतिष्ठति, तेनोत्थाप्तेन शरीरं शोधयन्ति साधका इतिभावः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये अष्टत्रिंशोऽनुवाकः ॥३८॥

---

मेधादेवीजुषमाणानआगाद्विश्वाचीभद्रा सुमन-स्यमाना, त्वयाजुष्टा जुषमाणादुरुक्ता न्बृहद्वदेमवि दथेसुवीराः ॥ १ ॥

विद्याकामस्य जपहोमादौ विनियुज्यते ( मेधादेवीत्यादि ) मन्त्र मेधादेवीति द्वित्रिष्टुभौ । श्रीसूक्तं श्रद्धासूक्तं मेधासूक्तं वाक्सूक्तं इत्त रनारायणः कौषितकिब्राह्मणं वैष्णवादिपुराणंच यद्गुणार्णवमज्जने नित्यं समुळवसन्ति, एवं भूतमहामाहिमयुक्ताया महालक्ष्म्यास्समाश्रयण मस्मिन् सूक्ते प्रतिपाद्यतइति त्रैविध्यवृद्धानां प्रवादः । ग्रन्थार्थ धारण समर्थाबुद्धिः “ मेधा ” तद्धेतुभूतेत्यर्थः । “ देवी ” देववाच्यस्या धिक क्रीडादिकल्याणगुणयुक्ता । “ जुषमाणा ” प्रीयमाणा । एते ममपुत्रा ममभक्ताइति प्रीतिप्रकर्षयुक्ता । “ नः ” अस्मान् । स्व चरणारविंद भजन यजन नमन कीर्तनादि विनोदनान् । “ आगात ” आगच्छतु । स्वयमाभिमुख्येनागत्यकटाक्षयतु । “ विश्वाची ” विश्वं तत्त्वजातमञ्चति व्याप्नोति । तथा च वैष्णवे पुराणे- “ नित्यैवैषाजगन्माता विष्णोश्श्रीरनपायिनी । यथासर्वगतो विष्णु स्तथैवेयं द्विजोत्तमे ” ति । “ भद्रा ” कल्याणानां हेतुभूता । तथा “ सश्लाघ्यस्सगुणीधन्य स्सकुलीनस्सबुद्धिमान् । सशूरस्सच विक्रान्तो यंत्वंदेविनिरीक्षसे ” इति । “ सुमनस्यमाना ” सर्वासु प्रजासु सानुग्रहबुद्धियुक्ता । यथा- “ सुमज्जानये विष्णवेदिदासति ” इति । श्रीमतिरामायणे- “ पापानांवा शुभानांवा वधार्हाणां प्लवं गम । कार्यंकरुणमार्येण नकश्चिन्नापराध्यति ” इति । इदानीं प्रत्य क्षवदाह । देविमातः । “ त्वया ” सर्वकल्याणकरया । “ जुष्टः ” कटाक्षेणवीक्षिताः । वयम् । “ जुषमाणाः ” प्रीयमाणाः, सेव मानावा । तात्कालिकश्वानज्ञ् । “ दुरुक्तान् ” तवागमनात् पूर्वं सुकृतादिभिर्वर्जितान्, त्वद्विरहान्मूकमायान्, दुष्टशब्दान्वक्तः ।

त्वयाजुष्टंऋषिर्भवति देवित्वया ब्रह्मागतश्रीरुत त्वया, त्वयाजुष्टश्चित्रं विन्दतेवसुसानोजुषस्वद्रविणेनमेधे ॥ २ ॥ (५४)

इत्येकोनचत्वारिंशो ऽनुवाकः ।

मेधाम्मइन्द्रोददातु मेधान्देवी सरस्वती, मेधां

इदानीं "विदथेसुवीराः" वैज्ञानिकेप्रशस्ताः । त्वत्सम्बन्धेन सर्वमङ्गलास्सन्तः । "बृहद्वदेम" बृहदुच्छ्रिताः । सर्ववक्रातिशायि सर्वसूक्तिसंगतिम् । "वदेम" वदितुं शक्ताभूयास्म ।

लक्ष्मीकटाक्षितानां मंगलयातिशयं दर्शयति (त्वयाजुष्टः) त्वया कटाक्षितोजनः । "ऋषिः" द्रष्टा । मन्त्रदृश्वाभवति । "त्वयाब्रह्मा" त्वयाकटाक्षितः "ब्रह्मा" ब्रह्मत्वंलभते । "उत" अपिच । "त्वया" सेवितः "गतश्रीः" भवति । प्राप्तश्रीः । मुक्तप्राप्यां श्रियं लभतइति । 'त्रयोवैगतश्रियश्शुश्रुवान् ग्रामणी राजन्य' इति । अपिच । "त्वया-जुष्टः" "चित्रं" चयनीयं । "वसु" धनं, "विंदते" लभते । हे "मेधे" "सा" तादृशी । त्वम् । "नः" अस्मान् । "जुषस्व" सेवस्व । "द्रविणेन" प्रशस्तेनाक्षयेन भगवद्भोगरूपेण परमधनेन अस्मान् जुषस्व ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्भाष्ये नारायणीये एकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

"मेधांम" इत्यनुष्टुप् । तत्रमेधाशब्देन लक्ष्मीप्रसादलभ्याग्रन्थार्थधारणसमर्था बुद्धिरुच्यते । ताम् । "मे" मह्यम् । "इन्द्रः" परमेश्वरः । "ददातु" । "देवीसरस्वती" लक्ष्म्याः प्रधानविभूतिः ।

मे अश्विनावुभावाधत्तां पुष्करस्रजा ॥ (५५)

इति चत्वारिंशोऽनुवाकः ।

---

अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां ॥ (५६)

इत्येकचत्वारिंशोऽनुवाकः ।

---

"मे" मह्यम् । "मेधां ददातु" । "अश्विनौ चोभौ" भगवद्विभूतिप्रधानभूतौ । "मेधामाधत्तां" "पुष्करस्रजा" पुण्डरीकमालालंकृतौ ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये चत्वारिंशोऽनुवाकः ॥ ४० ॥

---

( अप्सरास्विति ) अनुष्टुप् । वर्णविकारश्छान्दसः । अप्सरस्सु । "या मेधा" वर्तते । "गन्धर्वेषु च यन्मनः" मनसायुक्ता मेधावर्तते । "दैवी" देवसम्बन्धिनी । या । "मेधा" "मनुष्यजा च" या । "सा मेधा" "सुरभिः" शोभनगन्धा । शोभनख्यातिर्वा । "मां" "जुषतां" सेवतां ।

इति श्रीकूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये एकचत्वारिंशोऽनुवाकः ॥ ४१ ॥

---

आमांमेधासुराभिं विश्वरूपा हिंरण्यवर्णाजगती जगम्या, ऊर्जस्वतीपयंसापिन्वंमाना सामांमेधासुप्र तींकाजुषतां ॥ (१७)

इति द्विचत्वारिंशोऽनुवाकः।

सद्योजातम्प्रंपद्यामि सद्योजाताय्वैनमंः, भवे भंवेनातिंभवेभजस्वमां भवोद्भवायनमंः ॥ (५८)

इति त्रिचत्वारिंशोऽनुवाकः।

आमांमेधेतित्रिष्टुप्। "विश्वरूपा" विश्वार्थस्फुटीकारकुशला। "हिरण्यवर्णा" प्रकाशमाना। हितरमणीयस्वभावा। "जगती" अविच्छेदेन वर्तमाना। यङ्लुगन्तात् ङीप्। "आजगम्या" आगच्छतु। यङ्लुगन्ताल्लुङ्। अपिच। "ऊर्जस्वती" प्राणनादिगुणवती। "पयसा" "पिन्वमाना" क्षीरादिनासिञ्चती। गवादिविलक्षणसमृद्धिमती। "सुप्रतीका" शोभनोपक्रमा। या। सामां जुषतामिति।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये द्विचत्वारिंशोऽनुवाकः ॥ ४२ ॥

पुनरपिविद्यानिष्ठानां प्रत्यूहशान्त्यर्थं रुद्रप्रशंसार्थाः पंचब्रह्माख्याः पंचानुवाकास्सन्ति। एतेच स्वरितवद्यानन्तरं केश्चिदधीताः। एतेषामपि प्रशंसार्थत्वं पूजावचनादिभिः पूर्वोक्तन्यायैरध्यवसेयं। (सद्योजातमिति) परोष्णिक्। त्रिपदामामन्ता। शिष्टंयजुः। "सद्योजातं" यस्मिन्क्षणे सर्वेश्वरस्य सिसृक्षासम्भूता, तस्मि-

वामदेवायनमोज्येष्ठाय नमोरुद्रायनमःकालाय नमःकलविकरणाय नमोबलविकरणाय नमोबल प्रमथनाय नमस्सर्वभूतदमनाय नमोमनोन्मनाय नमः ॥ (५१)

इतिचतुश्चत्वारिंशोऽनुवाकः ।

---

त्वेवाविर्भूतं । अतएव सद्योजाताख्यं रुद्रं । प्रपद्ये । तस्मै रुद्राय सद्योजातायनमः । " भवेभवे " जन्मनिजन्मनि, भवाभवजन्मनिच । हेरुद्र ! "मांनभजस्व" नअनुगृहाण ! ' भवोद्भवायनमः" संसारप्रवर्तकाय तुभ्यंनमः । ' नाहमाराधयामित्वां तवबद्धोयमञ्जलिः ' इत्यादिवदिदम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये त्रिचत्वारिंशोऽनुवाकः ॥ ४३ ॥

---

वामदेवादयो रुद्रविशेषाः । तेषां त्रिपाक्षोभकराः तेभ्यश्च सभ्यो नमोवचनेन प्रियंकुर्मइति । तथाचात्रयइच्छाज्ञानाक्रियाशक्तीनां क्षोभकाः । काळः कळयिता । " कळाविकरणाय " कळयतीतिकळः । अव्यक्तविकारशेषः कळशब्देनोच्यते । तस्य " विकरणः " विकर्ता । " बळविकरणः " बळानांविकर्ता । " बळप्रमथनः " बळानां प्रकर्षेणकोळायिता । "सर्वभूतदमनः " सर्वेषांभूतानां दमयिता । " मनोन्मनः ' मन्त्राजीवोमनः, तस्योन्मानयिता । मनोविकारेण ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये चतुश्चत्वारिंशोऽनुवाकः ॥४४॥

---

अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्य स्सर्वतश्शर्व
सर्वेभ्यो नमस्ते अस्तुरुद्ररूपेभ्यः ॥ (६०)

इतिपञ्चचत्वारिंशोऽनुवाकः।

---

तत्पुरुषायविद्महे महादेवायधीमाहि, तन्नोरुद्रः
प्रचोदयात् ॥ (६१)

इतिषट्चत्वारिंशोऽनुवाकः।

---

( अघोरेभ्यइत्यादिना ) सर्वप्रकारेभ्यो रुद्रेभ्यो वाचमुद्गा चयति । "अघोरेभ्यः" शान्तेभ्यः । अथ "घोरेभ्यः" उग्रेभ्यः । "घोरघोरतरेभ्यः" तेभ्योपि घोरतरेभ्यः । अन्येभ्योपि येभ्यः केभ्यश्च । "रुद्ररूपेभ्यः" घोरप्रकृतिभ्यः । एतेभ्योन्येभ्योपि "सर्वेभ्यः" हे "शर्व" "ते" । त्वदीयेभ्यश्च । "सर्वतः" सर्वप्रकारे । वाङ्मनःकायैः । नमस्कुर्म इति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये पञ्चचत्वारिंशो ऽनुवाकः ॥ ४५ ॥

---

(तत्पुरुषायेति) गायत्री अम्भस्यपार इत्यत्रव्याख्याता ( १४३ पुटे) ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये षट्चत्वारिंशो ऽनुवाकः ॥ ४६ ॥

वन्ति, आसहस्रात्पङ्क्तिपुनंति,ओम । ३ ।(६३)

इत्यष्टाचत्वारिंशोऽनुवाकः ।

ब्रह्ममेधया, मधुमेधया, ब्रह्ममेवमधुमेधया ॥१॥

अद्यानोदेवसवितःप्रजावत्सावीस्सौभगं, परादु ष्वप्नियँसुव, विश्वानिदेवसवितर्दुरितानिपरासुव, य द्भद्रंतन्मआसुव ॥ २ ॥

मधुवाताऋतायते मधुक्षरंतिसिंधवः, माध्वीर्न स्संत्वोषधीः,मधुनक्तमुतोषसिमधुमत्पार्थिवँरजः[६४

मधुद्यौ रस्तुनःपिता, मधुमान्नोवनस्पतिर्मधुमाँ अस्तुसूर्यः, माध्वीर्गावोभवंतुनः ॥ ३ ॥

" आसहस्रात्पङ्क्ति पुनन्ति " सहस्रपुरुषाणां ब्राह्मणपङ्क्तौ श्राद्धादिषु भुजाना स्तांसर्वां पङ्क्ति पुनन्ति । आत्मानमारभ्य उभयतस्तां पङ्क्ति क्षाळितसर्वपापां कुर्वन्ति । " ओं " तेच सर्वे भगवच्छेष तैकरसाश्च भवेयुरिति ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये अष्टाचत्वारिंशोऽनुवाकः ॥४८॥

( ब्रह्ममेधयेति ) द्वितीयस्त्रिसुपर्णः । पूर्वेणैवगतप्रायः । पूर्वोक्तं " ब्रह्म " " मधु " च । उभयरूपंच । " मेधया " बुद्धि विशेषेण प्राप्यते । तादृशीं मेधां प्रार्थयते । " अद्यान " इत्याद्यामंत्रा अणोरणीयानित्यत्र (१८० पुटे)व्याख्याताः । एतैर्भगवज्ज्ञानवतां देवादि

यइमंत्रिसुपर्णमयाचितंब्राह्मणायंदद्यात्, भ्रूणह
त्यांवाएतेघ्नंति, येब्राह्मणास्त्रिसुपर्णंपठंति,तेसोमंप्राप्नु
वंति, आसहस्रात्पङ्क्तिंपुनंति,ओं ।४। (६४)[६५]

रजोनवच ॥

इत्येकोनपञ्चाशोऽनुवाकः ।

---

ब्रह्म मेधवा, मधु मेधवा, ब्रह्ममेवमधु मेधवा ॥१

ब्रह्मादेवानां पदवीः कवीना मृषिर्विप्राणां महि
षोमृगाणां, श्येनोगृध्राणाँ स्वधितिर्वनानाँ सोमः प
वित्रमत्येतिरेभन्न् ।२।

हँसश्शुचिष द्वसुरन्तरिक्षस द्धोतावेदिष दति
थिर्दुरोणसत् , नृषद्वरस द्दृतसद्व्योमस दब्जा गो
जा ऋतजा अद्रिजा ऋतं बृहत् ॥ ३ ॥

वश्यत्वमुक्तम् । "यइदान्त्रिसुवर्णमयाचित" मितिपूर्वस्य ।
"भ्रूणहत्या" वेदवेदांगविदोब्राह्मणस्य वधः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये एकोनपञ्चाशोऽनुवाकः ॥४९॥

---

(ब्रह्ममेधवेति) तृतीयस्त्रिसुपर्णः । "मेधवा" मेधवत् । याग
वत् । भगवत्समाराधनरूप परमयागवत् । तत् प्रापकमिति । मेध
वेतिवत्वंताव 'सुपांसुलु' गित्यादिना डादेशः । "ब्रह्मादेवानां"
मित्यादिकं उपाख्यातं अणोरणीयानित्यत्र (१७६पुटे) । एताभ्यमुभाभ्यां

यइमंत्रिसुपर्णमयाचितं ब्राह्मणायंदद्यात् , वीरहत्यांवाएतेघ्नंति, येब्राह्मणास्त्रिसुपर्णपठंति,तेसोमंप्राप्नुवंति, आसहस्रात्पङ्क्तिंपुनंति,ओं ॥ (६५)[६६]

इति पञ्चाशोऽनुवाकः ।

---

प्राणापानव्यानोदानसमाना मेशुध्यन्तांज्योतिरहंविरजाविपाप्माभूयासँस्वाहा ॥ (६६)[६७]

इति एकपञ्चाशोऽनुवाकः ।

---

ब्रह्मादीनां भगवद्विभूतित्वं तद्धेतुभूता भगवद्व्याप्तिश्च प्रदर्शिता। एवंज्ञानं मुक्तिसाधनमितियावत् । " वीरहत्या " राजन्यहत्या । अभिषिक्तक्षत्रियवध इत्येके । अन्यत् सर्वं समानम् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये पञ्चाशोऽनुवाकः ॥ ५० ॥

---

अथ सन्यासविषया विरजस्त्वार्थाहोमा एकादशानुवाकाः । तत्र प्रथमं प्राणादयः पंचापिवायुवृत्तयः " शुध्यन्तां " तेनैव-हेतुना । परञ्ज्योतिः रूपोहम् । " विरजाः " रजस्तमोभ्यां विनिर्मुक्तः । " विपाप्मा " तद्धेतुभूतसकलपापैः वासनारुचिप्रकृतिसम्बन्धादिभिश्च मुक्तोभवेयम् । " स्वाहा " तथा मांजुहोमि परस्मिन्पुंसि प्रक्षिपामि । परस्मैज्योतिषे मांददामीतियावत् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये एकपञ्चाशोऽनुवाकः ॥ ५१ ॥

वाङ्मनश्चक्षुश्श्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूति सङ्कल्पामेंशुध्यंतांज्योतिरहं विरजा विपाप्माभूयासँ स्वाहा ॥ (६७) [६८]

इति द्विपञ्चाशोऽनुवाकः ।

शिरःपाणिपादपार्श्वपृष्ठोदरजङ्घ शिश्नोपस्थपायवोमेंशुध्यन्तांज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ॥ (६८)[६९]

इति त्रिपञ्चाशोऽनुवाकः ।

( वाङ्मनइत्यादि ) तत्ररेतश्शब्देनोर्ध्वेन्द्रियाणां हेतुभूतोहंकारोभिप्रेतः । आकूतिरभिप्रायः । शेषंसुगमम् । अस्मिन् ज्ञानसाधनदशकशुद्धिः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये द्विपञ्चाशो ऽनुवाकः ॥ ५२ ॥

( शिरःपाणीत्यादि ) अत्रकर्मसाधनदशकशुद्धिः प्रार्थ्यते ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये त्रिपञ्चशोऽनुवाकः ॥ ५३ ॥

त्वक्चर्ममाँसरुधिरमेदोस्थिमज्जा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँस्वाहा ॥ (६९) [७०]

इति चतुःपञ्चाशोऽनुवाकः ।

शब्दस्पर्शरूपरसगन्धा मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासँस्वाहा ॥ (७०) [७१]

इति पञ्चपञ्चाशोऽनुवाकः ।

पृथिव्यप्तेजोवाय्वाकाशा मे शुध्यंतां ज्योतिरहं विरजा विपाप्मा भूयासँस्वाहा ॥ (७१) [७२]

इति षट्पञ्चाशोऽनुवाकः ।

(त्वक् चर्मेत्यादि) अत्र त्वगादिमज्जान्त सप्तधातुशुद्धिः । मज्ज शब्दात् "सुपां सुलु" गिति डादेशः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये चतुःपञ्चाशोऽनुवाकः ॥ ५४ ॥

(शब्दस्पर्शेत्यादि) अत्र शब्दादिगन्धांतपंचविषयशुद्धिः ।

इति श्रीकूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये पञ्चपञ्चाशोऽनुवाकः ॥ ५५ ॥

(पृथिव्यप्तेज इत्यादि) अत्र पृथिव्याद्याकाशान्तपंचभूतशुद्धिः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये षट्पञ्चाशोऽनुवाकः ॥५६॥

अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयामे
शुध्यंतांज्योतिरहंविरजाविपाप्माभूयासँस्वाहा ॥
(७२) [७३]

इति सप्तपञ्चाशोऽनुवाकः ।

विविट्टि स्वाहा ॥ (७३) [७४]

इत्यष्टापञ्चाशो ऽनुवाकः ।

( अन्नमयेत्यादि ) अत्रान्नमयाद्यानन्दमयान्त पंचकोशशुद्धिः । आनन्दमयस्य अनाद्यनन्तापचाराप्रसन्नहृदयस्य तस्य प्रसादश्शुद्धि शब्देन विवक्षितः । अन्नमयादयो ब्रह्मविदाप्नोतीत्यत्र प्रतिपादिताः ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये सप्तपञ्चशोऽनुवाकः ॥ ५७ ॥

( विविट्टिस्वाहा ) हे पुरुषोत्तम ! " विविट्टि " त्वच्चरणारविन्द न्यस्त सकलोपकरणं अतएव शुद्धं ज्योतिर्मयं मां प्राप्नुहि । विषु व्याप्तौ । मध्यमपुरुषैकवचनम् । शपःश्लौ हे धिभावे ष्टुत्वे " निजां त्रयाणा " मिति गुणे च वेविड्ढीतिवक्तव्ये छान्दसत्वाद्विकृतः प्रयोगः । " स्वाहा " हुतं चेदमस्तु वेविक्षतेतुभ्यमिति ।

इति श्री कूरनारायणमुनिविरचिते तैत्तिरीयोपनिषद्व्याख्याने
नारायणीये अष्टापञ्चाशोऽनुवाकः ॥ ५८ ॥

घृणोत्कांयस्वाहा ॥ (७१) [७६]

इत्यूनषष्टितमोऽनुवाकः।

उत्तिष्ठपुरुषाहरीलोहितपिंगळाक्षि देहिदेहिददा पयितामेंशुध्यंतांज्योतिरहं विरुजा विपाप्मा भूयासँ स्वाहा ॥ (७६) [७७]

इति षष्टितमोऽनुवाकः ।

( घृणोत्कायस्वाहा ) सर्वेषां पापानां स्वेनदमनंयत्र, तत्रोत्काय उत्सुकाय । तदेकविनोदनाय । परस्मै पुरुषोत्तमाय । "स्वाहा" आत्मानं निवेदयामीत्यर्थः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये एकोनषष्टितमो ऽनुवाकः ॥ ५९ ॥

(उत्तिष्ठेत्यादि ) हे "पुरुष" पुरिशय! प्रत्यगात्मन्। "हरी" हरे-अपहरणशील । विषयैरात्मानमपहरन् बुद्धिर्मानासि । पुत्रांचोत्तिष्ठ तम् । "लोहितपिंगळाक्षि" लोहितशब्देन पिंगळशब्देन च तमो रजसीलक्ष्यंते । एतानि सत्वरजस्तमांसि यस्याः अक्षि । अक्षवदक्षं प्रवृत्तिसाधनभूत । हे "रोहितपिंगळाक्षि" त्वमप्युत्तिष्ठ । "देहिदेहि ददापयिता" इति महानुच्यते । देहिदेहीति ददापयिता । उपलक्षण त्वात् । कुरुष्वकुरुष्वेति कारयिता । सर्वप्रवृत्तिहेतुरित्यर्थः । ददापयितः त्वमप्युपतिष्ठ । "मेशुद्ध्यन्तां" मदीयास्ते एतेशुद्धय न्ताम् । ज्योतिरहमित्यादि पूर्ववत् । वर्णविकारलोपश्छान्दसः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये षष्टितमोऽनुवाकः ॥६०॥

ओँ स्वाहा ॥ (७६) [७७]

इति एकषष्टितमोऽनुवाकः ।

---

सत्यम्परं परꣳसत्यꣳ सत्येननसुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳहिसत्यंतस्मात्सत्येरमन्ते तपइतितपो

"ओँ स्वाहा" लोकत्रयव्यापिने सर्वजगद्रक्षकाय परमात्मने । आत्मानं पूर्वोक्तप्रकारशुद्धयुक्तम् । "स्वाहा" ददामीति यावत् । अस्य मन्त्रस्य ब्राह्मणं "ब्रह्मणे त्वामहसओमित्यात्मानं युञ्जीत" इति ।

इति श्रीकूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये एकषष्टितमो ऽनुवाकः ॥६१॥

---

एवमेकादशभिरनुवाकै रात्मन्यासाख्योमहायोगः प्रतिपादितः । तस्य माहात्म्य मुत्तरेण गोवल्लीवदन्यायेन प्रतिपाद्यते । अत्र वेदात्मा संसारिणां हित हिततर हिततमरूप सत्यादिकं धर्माम्नायं परपर नैरंतर्यतमप्रतिपादनेन प्रतिपादयति । अत्र वेदात्मा पुरुषोत्तमं सर्वसुलभं परमप्रापकं सकलवेदान्तरहस्यं प्रतिपादयितु मुपक्रमते । "सत्यं" सर्वेभ्यः पुरुषार्थेभ्यः "परं" प्रकृष्टम् । कुतइत्याकांक्षायामाह । "परꣳ सत्यं" सत्यं प्रकृष्टमिति सर्वेषां ऋषीणां सम्मतम् । "अश्वमेधसहस्रं च सत्यं चतुलयाधृतम् । अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते" इति । 'सत्ये सर्वंप्रतिष्ठितं तस्मात् सत्यं परमं वदन्ति' इति च वक्ष्यति । परत्वमेवोपपादयति (सत्येनेति) "सत्येन" हेतुनाहि, कदाचिदपि "सुवर्गाल्लोकान्नच्यवन्ते" अपिच । "सताꣳहि" सन्मार्गवर्तिनां परमसात्त्विकानाम् । "सत्यं" एवोत्कृष्टतमं मतं, नेतरत् । तस्माच्छ्रेयोर्थिनस्ते "सत्येरमन्ते" इति । तस्मादपि परं प्रतिपादयति (तपइति) यत्प्रसिद्धं "तपः" यम

नानशनात्परं यद्धिपरं तपस्तद्दुर्धर्षं तद्दुराधर्षं तस्मा
त्तपसिरमन्ते दमइतिनियतंब्रह्मचारिणस्तस्माद्दमे
रमन्ते शमइत्यरण्येमुनयस्तस्माच्छमेरमन्ते दान
मितिसर्वाणिभूतानिप्रशंसन्ति दानान्नातिदुष्करं त
स्माद्दानेरमन्ते धर्मइतिधर्मेण सर्वमिदंपरिगृहीतं

नियमादिलक्षणम् । तस्मात्पादपि परमिति महात्मनां मतम् । तप स्स्वरूपंदर्शयति ( तपोनानशनात् परमिति ) अनशनशब्देन क्षुत्पिपासादिनाऽवजातः क्लेशोलक्ष्यते । एवंभूतक्लेशसहत्वात् । "परं" अन्यत् "तपः" नास्ति । एतदुपवृंहितानि एकरात्र त्रिरात्र पराकोपवासचान्द्रायणानि । "यत्" यथोक्तलक्षणम् । "परंतपः" "तद्दुर्धर्षं" दुरभिभवम् । दुरनुष्ठानम् । किञ्च "दुराधर्षं" विघ्नादिभिः नप्रतिहन्यमानम् । तस्मादेतादृशे "तपसि" एव "रमन्ते" श्रेयोर्थिनः । ( दमइति ) "दमः" इन्द्रियसंयमः । परमाहुः "ब्रह्मचारिणः" ब्रह्मचर्यवन्तः । दमएवपरम "नियतं" तपोयस्मात् "तस्माद्दमेरमन्ते" ब्रह्मचर्यकामाः । ( शमइति ) "शमः" सर्वप्रवृत्त्युपरमः । परमाहुः, तेन "अरण्येमुनयः" वसन्ति । तस्य महाफलत्वात् । तस्मात् "शमे" सर्वप्रवृत्त्युपरमे । "रमन्ते" वैखानसादयः । "दानमिति सर्वाणि भूतानि प्रशंसन्ति" परस्वत्वापत्तिपर्यन्तोऽनन्ययोदानम् । तत्परंतप इति सर्वाणि भूतानि प्रशंसन्ति । तिर्यञ्चोपि प्रार्थयन्ते । "दानान्नातिदुष्करं" प्राणसमधनव्ययरूपत्वात् । "तस्माद्दानेरमन्ते" पुरुषार्थिनः । "धर्म इति" उक्तदानादिव्यतिरिक्त श्रौतस्मार्तलक्षण आनृशंस्यादिर्धर्मः । तमेवपरंवदन्ति । तेनैव "धर्मेणसर्वमिदं" जगत् "परिगृहीतं" प्रतिष्ठापितम् । सर्व धर्मे

धर्मान्नातिदुश्चरंतस्माद्धर्मेरमंतेप्रजनइतिभूयाᳪंसस्त
स्माद्भूयिष्ठाः प्रजायंतेतस्माद्भूयिष्ठाः प्रजनेरमंते
ग्नयइत्याह तस्मादग्नय आधातव्या अग्निहोत्र
मित्याह तस्मादग्निहोत्रेरमंते यज्ञइतियज्ञोहिदेवा
नां यज्ञेनाहिदेवादिवंगतास्तस्माद्यज्ञे रमंते मानस

वशवर्तीत्यर्थः । तस्माद्धर्मस्यप्रधानत्वादतोन्यत् । "अतिदुश्चरं" "न" अस्ति । धर्मोपमलस्यैश्चरितुमशक्यः । "तस्माद्धर्मेरमन्ते" मनीषिणः । "प्रजन इति" पुत्रपौत्रादेरुत्पादनम् । परमिति । "भूयांसः" अनेके वदन्ति । यस्मात् प्रजनः परः । "तस्मात् भूयिष्ठाः प्रजायन्ते" प्रजानुत्पादयन्ति । तेअधिकफलभाजः "तस्मात् भूयिष्ठा" मध्यमाश्रमवर्तिनः । "प्रजनने" गार्हस्थ्ये "रमन्ते" प्रजाशया तत्रवृत्तिं कुर्वन्ति । तत्र मनुः 'पुत्रेणलोकान्जयति पौत्रेणानन्त्य मश्नुते' इति । "अग्नय इत्याह" अग्नयोगार्हपत्यादयः । तेपरंतप इति श्रुति राह । यस्मादेते अग्नयोगार्हपत्यादयः पंच क्षेमं कुर्वन्ति । तस्मात् । "अग्नयः" "आधातव्याः" सर्वैः । "अग्निहोत्रमित्याह" अग्निहोत्रं परमन्तप इति श्रुतिराह । यतो 'यावज्जीवमग्निहोत्रंजुहोती' ति श्रुतेस्तस्मादरमाद्ध । 'तस्मादग्निहोत्रेरमन्ते" वैदिकाग्रेसराः । (यज्ञइत्यादि) "यज्ञः" ज्योतिष्टोमादिः । सप्तसोमसंस्थाः सप्तपाक संस्थाः सप्तपशुसंस्थाः । तेपरमित्याहुः यज्ञविदः । "यज्ञेनहि-देवादिवंगताः" 'यज्ञेन' साधनेनहि । 'देवाः' द्योतनादिगुण युक्ताः । स्वर्गादिपदंप्राप्ताः । "तस्माद्यज्ञेरमन्ते" विपश्चितः । "मानसमिति विद्वांसः" मनसासम्पाद्योमानसः । योगसंसिद्धेन चेतसाद्यात्मज्ञानमुत्पद्यते । तदेवात्मज्ञानं विद्वांसः परमंवदन्ति

मितिविद्वाँसस्तस्माद्विद्वाँसएवमानसेरमंते न्यास

ब्रह्मा इति ब्रह्माहिपरःपरोहिब्रह्मा तानिवाएतान्यवराणि

तपाᳬंसि न्यासएवात्यरेचयद्यएवंवेदेत्युपनिषत् ॥

(७७) [७८]

इति द्विषष्टितमोऽनुवाकः ।

तदेवपरमंतपइति निश्चित्य "विद्वांसः" योगिनः । तत्र "रमन्ते" मुमुक्षवः । ततोऽन्यत् तपांनेच्छन्ति ।( न्यासइत्यादि ) परमैकान्तिनः परमसात्विकाः "न्यासइति" प्रतिपादितमात्मन्यासरूपं परमयागं परम वदन्ति । कोयमित्यपेक्षाया माह । "ब्रह्मा" ब्रह्मैवस्वयं न्यासः । अपारकारुण्य सौशील्यवात्सल्यादिगुणाकरोभगवान् न्यासाख्योधर्मः । "ब्रह्माहिपरः" सर्वोत्कृष्टः । तस्य परत्व सुस्पष्टमिति वेदात्मा हिशब्देन प्रथयति "परोहिब्रह्मे" ति । सर्वोपरिस्थितश्च सर्वेभ्योधर्मेभ्य स्सर्वेभ्यश्चेतनेभ्यश्च प्रकृष्टइत्यर्थः । तथा 'अहंकृत्स्नस्य जगतःप्रभवः प्रलयस्तथा' 'मत्तः परतरंनान्यत् किंचिदस्तिधनंजये' ति । यस्मात् ब्रह्मा न्यासाख्यः सर्वस्मात् परतरः, तस्मात् पूर्वोक्तानि "तानि" सत्यादीनि "एतानि" तपांसि "अवराणि" अल्पास्थिरफलानि । "क्षरन्तिसर्वावैदिक्यो जुहोतियजतिक्रियाः । अक्षरंनक्षरंज्ञेयं ब्रह्माचैवप्रजापतिः" इति ! तद्विपर्ययात् न्यासः प्रकृष्टः । एतद्धेतुः प्रशंसा । "न्यासएवात्यरेचयत्" इतराणितपांसि सः "न्यासएव" "अत्यरेचयत्" "यएवं वेद" तेभ्यस्सत्यादिभ्योन्यासस्य प्रभावं योवेद, तस्यतान्यपि न्यासमाहात्म्यादतिरिक्तफलानिभवन्तीत्यर्थः । "इत्युपनिषत्" अत्यन्त रहस्यमित्यर्थः ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये द्विषष्टितमोऽनुवाकः ॥ ६२ ॥

प्राजापत्योहारुणिस्सुपर्णेयः प्रजापतिंपितरमु

पससार किंभगवंतःपरमं वदंतीतितस्मैप्रोवाच स

त्येनवायुरावाति सत्येनादित्योरोचते दिविसत्यंवा

चःप्रतिष्ठा सत्येसर्वं प्रतिष्ठितं तस्माथ्सत्यंपरमंवदं

ति तपसादेवादेवतामग्रआयन् तपसर्षयस्सुवरन्व

विंदन् तपसासपत्ना न्प्रणुदामारातीस्तपसिसर्वं

प्रतिष्ठितं तस्मात्तपःपरमंवदंति दमेनदांताःकिल्बि

षमवधून्वंति दमेनब्रह्मचारिणस्सुवरगच्छन् दमोभू

पूर्वानुवाकोक्तमर्थं युक्तिभिस्सविस्तरं प्रतिपादयितुमुपक्रमते ( प्राजापत्योहारुणिरित्यादि ) प्रजापतिररुणाख्यः पिता । तदपत्य मारुणिः । "सुपर्णेयः" सुपर्णायाः मातुरपत्यम् । "स्त्रीभ्योढक्" आदिवृद्ध्यभावश्छान्दसः । "पितरमुपससार" उपसन्नवान् । स्वापेक्षितमर्थं "किं भगवन्तः परमंवदन्तीति" 'भगवन्तः' प्रकृष्ट ज्ञानैश्वर्याः परमयोगिनः । 'किं' 'परमंवदन्ति' भगवत्प्राप्त्युपायेषु किं प्रकृष्टमितिवदन्तीत्यपृच्छत । "तस्मैप्रोवाच" तस्मैपिता प्रजापतिः प्रोवाच सत्यादीनि परमतपस्त्वेन प्रोक्तवानिति । तच्छ्रुत्वा पुत्रोनेदंपरमं नेदंपरमामिति पुनःपुनः पृष्टवान् । पिताच पुत्रं प्रतिवा-क्यार्थं तत् परत्वप्रतिपादनपूर्वकमेव सत्यादीन्यनुक्रमेण प्रोवाचेत्यर्थः । सत्येनेत्यादयश्श्लोकाः प्रसिद्धार्थाः । "सत्येसर्वंप्रतिष्ठितं" तदधीन स्वरूपस्थिति प्रवृत्तित्वात् । "तस्मात्" "सत्यं" भगवत्प्राप्ति साधनमिति । 'वदन्ति" भगवन्तः । "देवता" देवत्वम् । "अन्वविन्दन्" लब्धवन्तः । "सपत्नान्" "प्रणुदाम" शत्रून् निरस्यते । "अरातीः" अरातीन् दुर्हृदः । दमादयः पूर्वोक्ताः ।

तानां दुराधर्षं दमेसर्वं प्रतिष्ठितं तस्माद्दमः परमंव
दंति शमेनशांताशिवमाचरंति शमेननाकम्मुन
योन्वविंदञ्छमोभूतानांदुराधर्षं शमेसर्वंप्रतिष्ठितं
तस्माच्छमः परमंवदंति दानंयज्ञानांवरूथं दक्षि
णालोकेदातारंसर्वभूतान्युपजीवंति दानेनाराती
रपानुदंत दानेनद्विषंतोमित्राभवंति दानेसर्वंप्रति
ष्ठितं तस्माद्दानं परमंवदंति धर्मोविश्वस्यजगतः
प्रतिष्ठालोकेधर्मिष्ठं प्रजाउपसर्पंति धर्मेणपापमप
नुदंति धर्मेसर्वंप्रतिष्ठितं तस्माद्धर्मंपरमंवदंति प्र
जननंवै प्रतिष्ठासाधुप्रजायास्तंतुंतन्वानः पितृणा
मनृणोभवंति तदेवतस्यानृणं तस्मात्प्रजननंपरमं

"दानंयज्ञानांवरूथं दाक्षिणा" वरूथंवरिष्ठं । "दानेन" "द्विषन्तः" शत्रवः, "मित्रा" मित्राणि । "भवन्ति" 'सुपांसुलु' गित्यकारः । धर्मोहि देवानां प्रीतिकरः । "प्रजननंवैप्रतिष्ठा" "प्रजननं" अपत्यम् । 'प्रतिष्ठा' स्थितिहेतुभूतं वंशस्य । कोर्थोवंशेनेति चेत् ; तत्राह । "साधुप्रजायास्तन्तुं तन्वानः" 'साधु' समीचीनं शास्त्रीयेणप्रकारेण, 'प्रजायाः' 'तन्तुं' अविच्छेदं, कुर्वाणः' पितृणामातृण्यं प्राप्नुयात् । 'प्रजयापितृभ्य' इति यदृणमुक्तं, तस्मान्मुक्तो भवतीति । "तदेव" प्रजननम् । "तस्य" प्रजाख्यमृणं पितृभ्योधारयतः पुरुषस्य । "अनृणं" अनृणत्वहेतुः । नान्येनोत्तमर्णाःपितरस्तृप्यन्ति ।

वदंत्यग्नयोवैत्रयीविद्या देवयानःपन्था गार्हपत्य ऋक्पृथिवीरथंतरमन्वाहार्यपचनोयजुरंतरिक्षं वाम देव्यमाहवनीयस्सामसुवर्गोलोकोबृहत्तस्मादग्नीन्प रमंवदंत्यग्निहोत्रँसायम्प्रातर्गृहाणां निष्कृति रिस्विष्टँसुहुतंयज्ञक्रतूनां प्रायणँसुवर्गस्यलोकस्यज्यो तिस्तस्मादग्निहोत्रंपरमंवदंति यज्ञइतियज्ञोहिदे वानां यज्ञेनहिदेवादिवंगतायज्ञेनासुरानपानुदंतय ज्ञेनद्विषंतोमित्राभवंति यज्ञेसर्वंप्रतिष्ठितं तस्माद्यज्ञं परमंवदंति मानसंवैप्राजापत्यपवित्रंमानसेनमनसा

"अग्नयः" गार्हपत्यादयः। तेस्त्वय "त्रयीविद्या" तथा तेषां तत्र प्रतिपाद्यत्वात्। "देवयान-पन्थाः" परमपदप्राप्ति हेतुमार्गश्च। यागद्वारेण। किंच तेषांमध्ये- । "गार्हपत्यः ऋक्" "पृथिवी" "रथं तरं" साम। "अन्वाहार्यपचनः" दक्षिणाग्निः। गार्हपत्यं ऋगादित्रयं दक्षिणाग्निर्यजुरादित्रयं आहवनीयः सामादित्रयं। एतेषामग्निसाधनत्व साध्यत्वयोगा त्सर्वेग्नय इत्यग्निमाशस्त्य मुक्तम्। तस्मात "अग्नीन् परमं" धर्मं "वदन्ति" त्रविद्यवृद्धाः। "अग्निहोत्रं" "सायंप्रातः" हूयमानमग्निहोत्रम्। "गृहाणां" गृहसम्बन्धिनां पापानाम्। "नि ष्कृतिः" शोधनम्। "स्विष्टंसुहुतं" यागस्य होमस्य च शोभनत्वहेतुरग्निहोत्रम्। "यज्ञक्रतूनां" यूपवतां यज्ञानां ज्योतिष्टो मादीनां च। "प्रायणं" प्रारम्भः। तेहि यागाग्निहोत्रे विना न भवेयुः। "सुवर्गस्य लोकस्य" "ज्योतिः" द्योतकं प्रकाशकम्। तस्मात "अग्निहोत्रंपरमंवदन्ति" ब्रह्मवादिनः। (मानसमिति) यमादिभिश्शुद्धेनतुमनसा साध्यत्वा न्मानसमिति आत्मज्ञानमुच्यते। "प्राजापत्यं पवित्रं" "मनोवैप्रजापति" रिति मनसः प्रजापतिशेष त्वात् ज्ञानं "प्राजापत्यं" प्रजापतिप्रसादजन्यम्। प्रजापतिविषयंच।

साधुपश्यति मानसाऋषयः प्रजाअसृजंतमानसे सर्वप्रतिष्ठितं तस्मान्मानसं परमंवदंति न्यासइत्याहुर्मनीषिणोब्रह्माणं ब्रह्माविश्वः कतमस्स्वयंभुः

अतएव परमं " पवित्रम् " यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेर्जुन । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥ नहिज्ञानेन सदृशं पवित्रमिहविद्यते " इति । विष्णुपुराणे-"यथाग्निरुद्धतशिखः कक्षंदहतिसानिलः । तथाचित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिष"मिति । " मानसेनमनसा " मानसेनज्ञानेन, मनसायोगसंशुद्धेन भक्तियुक्तेन । " नसंदृशेतिष्ठतिरूपमस्य नचक्षुषापश्यतिकश्चनैनम् । हृदामनीषामनसाभिक्लृप्तो यएनंविदुरमृतास्तेभवन्ती "ति भक्तिसंशुद्धेनमनसाज्ञातव्यत्वमुक्तम् । " साधुपश्यति " साक्षात्करोति । " मानसा ऋषयः प्रजाअसृजन्त " तथा- ' महर्षयस्सप्तपूर्वेचत्वारोमनवस्तथा । मद्भक्तामानसाजाता येषांलोकइमाः प्रजा ' इति । " मानसेसर्वप्रतिष्ठितं " सर्वंपुरुषार्थजातं मानसाधीनम् । " तस्मात् मानसं " ज्ञानमेव " परम " धर्मं " वदन्ति " योगिनः । " न्यासइत्याहुर्मनीषिणो ब्रह्माणं " साक्षाद्ब्रह्माणं पुरुषोत्तमं नारायणमेव, मनीषिणः मनसईशाः, परमैकान्तिनान्यासइत्यात्मरक्षकं परमंधर्ममाहुः । तथा " येचवेदविदोविप्रा येचाध्यात्मविदोजनाः ॥ तेवदंति महात्मानं कृष्णंधर्मं सनातन'मिति । भगवच्छास्त्रे अहिर्बुन्ध्यसंहितायां अहिर्बुन्ध्यः ' यानिनिःश्रेयसार्थानिचोदितानि तपांसिवै । तेषांतु तपसांन्यास मतिरिक्तं तपश्श्रुतम् । समितसाधनकादीनां यज्ञानांन्यासमात्मनः । नमसायोकरोद्भवे सस्वध्वरइतीरितः' इति । कीदृशो ब्रह्मेत्याकांक्षायामाह । " ब्रह्मा" " विश्वः " । सर्वेषां भूतानामयमात्मा । सर्वाणिभूतान्यस्य शरीरमित्यर्थः । " कतमः " अशक्यनिर्धारणस्वरूपस्वभावः । " स्वयंभुः " त्वदर्रक्षणार्थं स्वय

प्रजापतिस्संवत्सरइति संवत्सरो सावादित्यो यएष आदित्येपुरुषस्सपरमेष्ठीब्रह्मात्मायाभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्योवर्षति पर्जन्येनौषधिवनस्पतयःप्रजायंत ओषधिवनस्पतिभिरन्नं भवत्यन्नेनप्राणाःप्राणैर्बलंबलेनतपस्तपसाश्रद्धाश्रद्धयामेधामेधया

मेव आभिर्भवतीति । विसर्जनीयलोपश्छान्दसः । " प्रजापतिः " प्रजाना मुत्पादयितात्व । " संवत्सरः " सर्वेषुभूतेषु आत्मतयान्याप्य नियच्छन्वसतीति । ब्रह्मण एवंगुणकत्वात् तस्यैव न्यासत्वाच्च मनीषिणो न्यासःपरमित्याहु रिति संबधः । अस्य संवत्सरस्य स्वरूपं कीदृशमित्यपेक्षायाम् ; " संवत्सरासावादित्यः " किं संसारमध्यवर्ती आदित्य ? नेतिदर्शयति । " यएष आदित्ये पुरुषः " आदित्येपियो वसति । स पुरुषोत्तम स्संवत्सरत्वेनविवक्षितः । " स परमेष्ठी " ' तमसः परस्तात् ' ' रजसः परात् ' इत्यादि श्रुतिसिद्धपरमपदस्थो महाविभूतिकः पुरुषोत्तमः, सएव जगद्रक्षणार्थं मन्तर्वसतीत्यर्थः । " ब्रह्मा " बृहत्त्व बृंहणत्व गुणयोगि मुमुक्षुभि रुपास्यं परब्रह्म । भूयः उपासकानां " आत्मा " तथाच ' आत्मेतितूपगच्छंति ग्राहयन्तिचे ' ति सूत्रकारः । तस्य कथं जगद्रक्षणार्थं मन्तर्वसति रित्याह ( याभिरादित्यइति ) रश्मि शब्दस्य उभयलिंगत्वात् स्त्रीलिंगता । " याभीरश्मिभिः " " तपति " शोषयति । सर्वम् । " ताभि " रेव रश्मिभिः पर्जन्याकारेण पूर्वपीतं जलं पुनर्वर्षति । पर्जन्यस्सृष्टेन वर्षेण " ओषधिवनस्पतयः " " प्रजायन्ते " प्रकर्षेणजायन्ते । " ओषधि वनस्पतिभिरन्नंभवति " धान्यानिफलमूलानि च भवन्ति । भुक्तेन " अन्नेन " प्राणिनां " प्राणाः " प्रवृद्धा भवन्ति । " प्राणैः " प्रवृद्धैः " बलं " जायते । अत्र बलशब्देन कार्यकरणसामर्थ्यं

विज्ञानादानंदो ब्रह्मयोनिस्सवाएषपुरुषः पञ्चधापं
ञ्चात्मायेनसर्वमिदम्प्रोतं पृथिवीचांतरिक्षञ्च द्यौश्च
दिशश्चावांतरादिशाश्च सवैसर्वमिदञ्जगत् सचभूतँ
सभव्यं जिज्ञासक्लृप्तऋतजारयिष्ठाश्श्रद्धा सत्यो

"विज्ञानात्" न्यासाख्य विलक्षणज्ञानात् । "आनन्दोब्रह्मयोनिः" ब्रह्मस्व रूपरूपगुण विभवादिजन्मा आनन्दवल्लीमीमांसितः शतगुणितोत्तर क्रमेण, सकलवाङ्मनसागोचरत्वेन प्रतिपादितो भगवदानन्दोस्य सदानुभाव्योभवति । तस्य परब्रह्मणः पुरुषोत्तमस्य मुक्तभोग्यस्वरूपं च दर्शयति । "सवाएषपुरुषः" पूर्वोक्त सकलविशेषण विशिष्ट आदित्यान्तरवस्थितः सर्वनिर्वाहकः पुरुषः । "पंचधा" पंचप्रकारेण भोग्यः । 'परमेष्ठी पुमान्विश्वोनिवृत्तिस्सर्वइत्यपि' इति दिव्य शास्त्रोक्तप्रकारेण पंचात्मा । तेषां पंचानामात्मा साक्षाद्व्याप्यधारणादि कमृच्छतीति पचात्मा । एवं-भूतदिव्यरूपेण "येन" पुरुषोत्तमेन । "इदंसर्वं" "प्रोतं" व्याप्तम् । तत्र सर्वत्र स्थूलसूक्ष्मा दिकं सर्वं व्याप्तं इति दर्शयति । (पृथिवीचान्तरिक्षं चेत्यादि) व्याप्तिफलभूतं अन्याशेषत्वं दर्शयति (सचभूतं सभव्यमिति) "भव्यं" भवत् । उपलक्षणत्वात् भविष्यच्च । उक्तप्रकारस्य न्यासाख्यस्य धर्मस्य हेतून् फलपञ्चके परमानुभावमाचष्टे । (जिज्ञास क्लृप्त इति) क्लृप्तजिज्ञासः । न्यासाख्य ब्रह्मणो जिज्ञासाधिकारप्रवृत्तियुक्तः । पदयोस्स्थानविनियमः । क्लृप्तजिज्ञास इति यावत् । ऋतेस्संराधनात्मकं जातः । 'जनसनेति' विट् । 'विड्वनोरनुनासिकस्या' दिति आत्वम् । "रयिष्ठाः" यदुक्तं सन्यासाख्यं ज्ञानं धनं तत्र तिष्ठतीति । "स्थः क च" इति क्विप् । "श्रद्धा" श्रापूर्वाद्धधातेः 'क्विप् च' इति क्विप् । [illegible] यावत् । "सत्यः" यथा

तैत्तिरीये महस्त्वान् तमसोपरिष्टात् ज्ञात्वा तमेवं मन्त्रमा हृदा च भूयो न मृत्युमुपयाहि विद्वान् तस्मादन्यामेषां तपसामतिरिक्तमाहुः ।

स्थितं परंब्रह्म एव, तत्र साधुः सत्यः । सर्वथा तन्निष्ठ इति यावत् । " महस्त्वान् " प्रकृष्टतमात्मानुसन्धानेोधकृतारोषाज्ञानइति यावत् । " तमसोपरिष्टात " शुद्धसत्त्वेस्थितः । सप्तम्यर्थे तृतीया । एवमुक्तसाधनसम्पन्नः पूर्वोक्तविशेषणविशिष्टन्यासाख्यं ब्रह्म 'मनसा" रजस्तमोऽतिगेन । " हृदा " भक्त्या । हृदिति भक्तिरुच्यते । तथा च श्रुत्यन्तरे प्रसिद्धत्वात् " भक्त्या च धृत्या च समाहितात्मे " ति । "त" ब्रह्माणम । "एवं विद्वान्" "भूयोनमृत्युमुपयाही" ति । संसारंनोपयाति । नोपयाहीति शिष्यंप्रत्युपदेशोवा । मृत्युंनोपयास्य इति । " जातस्य हि ध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यचे " ति जन्ममरणयोरविनाभावाज्जन्मापि नोपयातीत्युक्तंभवति । तदिदं भूयश्शब्देन विवक्षितमेव । सत्यादिषुधर्मेषु उत्तरोत्तरस्य प्रकर्षात् न्यासाख्यस्यधर्मस्य बृहत्त्वात् ब्रह्मणस्सर्वपरत्वात् सर्वात्मत्वात् सर्वप्रमाणै र्निर्धारितस्वरूपत्वात् स्वयमेव स्वशोभाल्यादिभि स्सर्वेभ्यः प्रकाशितस्वरूपत्वात् सर्वभूतानामधिपतित्वाच्च सर्वंव्याप्य सर्वत्र नियमनादिकरणार्थं सर्वदाप्रत्वेन निवासात् आदित्यान्तरवस्थितत्वात् सर्वेषां प्रकाशवर्षातपादिप्रदानेन पोषकत्वात् अन्नप्रदानेन प्राणबलतपश्श्रद्धामेधादीनां निबन्धकत्वात् स्वासाधारण दिव्यज्योतिर्मयनिरवद्यनिरतिशयसौन्दर्यलावण्या द्याकारपरमभोग्यरूप परत्वात् ज्ञानानन्दामलात्मक दिव्यस्वरूपत्वात् एव भूतगुणरूपादिविशिष्टस्यैव स्थापनधारण नियमनादिविनोदनत्वात् बद्धमुक्तानां तद्भोग्यभोगोपकरणभोगस्थानरूपस्या चेतनजातस्य च परमशेषित्वात् एवंविध ज्ञानामृतसन्धुक्षितान्तःकरणानां संसारादि सकलदुःखनिवृत्तिपूर्वक निरतिशयानन्दभानुकाष्टाच सर्वेभ्यस्तपोभ्यो

वसुरण्वोविभूरसि प्राणेत्वमसि संधाता ब्रह्म
न्त्वमसिविश्वसृक् तेजोदास्त्वमस्यग्नेर्वर्चोदास्त्व

न्यासाख्यः परोधर्मस्सर्वधातिरिक्त इति त्र्यध्वर्ववेद आहुः । तथा च बह्वृचाः " यस्समिधायय आहुती योवेदेनददाशमर्त्यो अग्नयेयोमनसा स्वध्वरः " इति । तत्राश्वलायनः " योनमसास्वध्वरः " इति । "नमस्कारेण वैखल्वपि नवै नमस्कारमहंति यज्ञोवैनम" इति हि ब्राह्मणम् ।

अथसन्यासप्रयोगं मन्त्रंचाह ( वसुरण्व इति ) अतिजगतीषट् पदायजुरन्ता । तत्र अतिजगत्या भगवतः संसारिणां भोगमोक्षाद्य पेक्षितं साधकत्वं प्रतिपाद्यते । हे " ब्रह्मन् " बृहत्व बृह्मणत्वा दिकल्याणगुणाकर पुरुषोत्तम ! त्वं " वसुरण्वः " वसुनः मुक्त भोग्यस्य निरवधिकातिशयानन्दस्य परमनिधेः, रवयिता गमयिता । "रवि गतौ ।" इतिरवात्म् । " विभूः " सर्वव्याप्यस्थितोपि । " प्राणे " प्राणनादिव्यापारे । जीवात्मनां " सन्धाता " सम्बन्धितात्वमसि । शुभाशुभकर्मानुगुणं देवतिर्यङ्मनुष्यस्थावरासु योनिषु सर्वासु सम्बन्ध्य क्रीडसीत्यर्थः । " विश्वसृक् " करतलामलकवत् सर्वसाक्षात्कृतवा नसि । सर्तेर्गत्यर्थत्वात् गत्यर्थाबुद्ध्यर्था इति ज्ञानार्थता । अन्यथा पुनरुक्तिप्रसंगात् । सर्तेः क्विप् । नकेवलं यादृशानां तादृशानां स्वरूपस्थितिप्रवर्तकः, अपित्वग्न्यादित्यादि जगन्निर्वाहकाणामपि निर्वाह- कस्त्वमसीत्याह " तेजोदास्त्वमस्यग्नेः " अग्नेरपि तेजसोदातात्वमसि । दहनप्रकाशनतेजोहेतुरित्यर्थः । " वर्चोदास्त्वमसिसूर्यस्य " त्वत्प्र वृत्तेन तापबलेन सूर्यं स्सर्वं प्रतापयति । "शुन्मोदास्त्वमसि चंद्रमसः" त्वत्प्रसादादेव चंद्रमाशुन्मवान् आह्लादनकरज्योतिष्मान् भवति । अशुगागमश्छांदसः । ' यस्यादित्योभा मुपयुज्यभाति ' ' येनसूर्यस्तपति तेजसेद्धः ' ' सूर्याचन्द्रमसौ धातायथापूर्वमकल्पयत ' ' सूर्यस्यापि भवेत्सूर्योह्यग्नेरग्निः क्षमाक्षमा ' इत्यादि । एवं न्यासाख्यं भगवंतं

मं सिसूर्यस्यशुम्नोदास्त्वमं सिचन्द्रमस • उपयामगृही
तोसि ब्रह्मणेत्वामहसओमित्यात्मानंयुंजीतैतद्वैमहो
पनिषदंदेवानांगुह्यं यएवंवेद ब्रह्मणोमहिमानमा
प्नोति तस्माद्ब्रह्मणो महिमानं मित्युपनिषत् ॥

[७८] (७९)

(सत्यंतपोदमश्शमोदानं धर्मः प्रजननमग्नयोग्नि
होत्रं यज्ञोमानसं न्यासोद्वादश । )

इति त्रिषष्टितमोऽनुवाकः ।

---

प्रशस्य तत्रानिक्षिप्यमाणं जीवं प्रतिपादयति ( उपयामगृहीतोसि ब्रह्मणेत्वामहसइति ) कल्याणगुणाकराय परस्मैब्रह्मणे, तदर्थम् । " उपयामगृहीतोसि " हेजीव,त्वमुपयामेन सूयमानस्य हविषोस्कन्दन साधनेन मनसा, गृहीतोसि । एवं योगीन्द्रियाणि मनसा जीवात्मानं संगृह्य (?) " ओमिति " भगवतेशेषित्वेनेत्यर्थः । एवं युंजानानामिहैवा पवर्गस्सिद्धोभवतीतिभावः । यदिदमुक्तप्रकारं न्यासाख्यं ज्ञानं ह्येतद सर्वाभ्य उपनिषद्भ्यो महती उपनिषत्, रहस्यविद्यामित्यर्थः । " देवानां " दिव्यगोष्ठीनिष्ठा भगवद्भोगास्सूरयः देवाः । ते यत ज्ञानं मनुष्यादयो मा विजानीयुरिति गूहयन्ति, तादृतं ' गुह्यं " । एतद्वादतुः फलमाह ( यएवंवेदेत्यादि ) " ब्रह्मणोमहिमानं " सर्वेश्वरस्य पुरुषो त्तमस्य ' महिमानं ' महत्वम् " आप्नोति " ऐश्वर्यभोगादिक ब्रह्मावम् । तस्मात्तज्ज्ञानादेव । विद्यासमाप्ति सूचनी आवृत्तिः । इतः परं ज्ञातव्यं नास्तीतिभावः । " इत्युपनिषत " इत्तीदं परमरहस्यम् ।

इति श्रीकूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने

नारायणीये त्रिषष्टितमो ऽनुवाकः ॥ ६३ ॥

---

तस्यैवंविदुषो यज्ञस्यात्मायजमान श्श्रद्धापत्नी
शरीरमिध्ममुरोवेदिर्लोमानिबर्हिर्वेदश्शिखाहृदयंयूपः
कामआज्यंमन्युः पशुस्तपोग्निश्शमयितादक्षिणा

एवमुक्तमहिम्नोऽन्नात्ताख्यस्य परमधर्मस्य स्वरूपस्वभावं योवेद. यद्वायेनकेनापि प्रकारेण तेनसंबद्धवान् , सकेवलं स्वयं नकृतार्थः, किंतु तस्यापि सर्वरक्षकयागभूतत्वात् संबन्धिनोपि सर्वथाकृतिनइति दर्शयति (तस्यैव विदुषइत्यादि) एवं विदुषस्तस्य स्वरूपस्थिति प्रवृत्त्यादिकं सर्वरक्षक यागत्वेनोपदिशति । तेनसर्वदानुष्ठीयमानस्य "यज्ञस्यात्मा यजमानः" तद्वेदनसमर्थत्व आत्मैव यजमानः । ननु अनुष्ठायमानैधर्मैः । तदीयाश्रद्धैव तत्प्राप्तित्वरैव "पत्नी" सहधर्मचारिणी । सत्र तया तस्याविनाभूतत्वात् । "शरीरमिध्म" तज्ज्ञान दीप्तत्वात् । "उरोवेदिः" अभिमतानामर्थानां निधानस्थानत्वात् । "लोमानिबर्हिः" तेष्वस्य आस्तीर्णत्वात् । "वेदश्शिखा" तदीयो वेदः कर्तव्येषु बुद्धिस्वरूपत्वात् ज्ञानातिशयेन स्वरूपेणैव यागत्वेन रूप्यमाणस्यापि शिखायावेदत्वेन रूप्यमाणत्वात् विदुषामविदुषांच कदाचिदपि शिखात्यागो न कार्यइतिदर्शितम् । "हृदयंयूपः" मन्युः पशुरिति वक्ष्यमाणस्य यज्ञपशो स्तत्रैव बध्यमानत्वात् । "काम आज्यं" अस्य भगवति पुरुषोत्तमे स्वरूपगुणविभावानुभावेच्छा काम आज्यम् । पुरुषोत्तमस्य संदीपकत्वात् पुरुषोत्तमभोगस्य उपस्करणत्वाच्च । "मन्युःपशुः" भगवत्प्राप्तिविरोधि स्वाविद्याकर्म वासनाद्यमन्वाद्य कान्तिप्रकृतिसंबंधादिषु यो मन्युः क्रोधः सपशुः तस्य विशसनीयत्वात् । "तपोग्निः" तपोज्ञानं, सचाग्निः, तत्र सर्वेषां हूयमानत्वात् । "शमयितादक्षिणा" मन्युः पशुरित्युक्तस्य मन्योश्शमयिता शांतिरेव स्वर्वेषां भगवदाज्ञानुसंधानम् । सादक्षिणा । तस्य यज्ञस्य स प्राणनिर्धारिणकरी प्रदेया धनंवदित्यर्थः । तथाहि वैष्णवे पुराणे

वाग्घोताप्राणउद्गाता चक्षुरध्वर्युर्मनोब्रह्माश्रोत्रमग्नी
द्यावद्ध्रियतेसादीक्षा यदश्नाति यत्पिबति तदस्य
सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्यु
त्तिष्ठतेच सप्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य

'सर्वभूतात्मकेतात जगन्नाथे जगन्मये । परमात्मन्यगोविन्दे मित्रामित्र कथाकुत' इति । "वाग्घोता" तदीयावाक्, भगवद्गुणपरछन्दः, होता । होत्रस्य वाक् प्रवृत्तिरूपत्वात् । "प्राण उद्गाता" तदीयः प्राण उद्गाता । भगवद्गुणसंजात प्रीतिकारित सामगानादिहेतुत्वात् । उद्गातृत्वस्य बलकृतत्वात् प्राणस्य बलहेतुत्वाच्च । "चक्षुरध्वर्युः" तदीयं चक्षुः चक्षणं ज्ञानविशेषः, सोऽध्वर्युः, योगरूपस्य तत्प्रवृत्तिविशेषस्य निर्वाहात् । "मनो ब्रह्मा" सर्वेषां परम पुरुषस्वत्वेन तच्छेषत्वेन च तदीयं यन्मननं स ब्रह्मा । सर्वसाक्षिकत्वात् प्रवृत्तिहेतुत्वाच्च । "श्रोत्रमग्नीत्" भगवत्कीर्तीनां श्रद्धा भक्तिपूर्वकं श्रवणं सोऽग्नीत् । 'अन्तरिक्षमिवाग्नीध्र' मित्याकाश साम्येन शब्दसम्बन्धित्वश्रवणात् । "यावद्ध्रियते सा दीक्षा" यावत् कालं प्राणान् धत्ते, तावद्भगवदीयानां भगवत्तोषागमसन्निधियुक्तत्वात् । शरीरधारणार्थं "यत्" अन्नं "अश्नाति" "यत्" च उदकम् । "पिबति" "अस्य" "तत्" एव "सोमपानं" अस्मै भोजनादि दानं सोमयागसदृशमित्यर्थात् गम्यते । "यद्रमते तदुपसदः" तस्योपसद्वारकत्वात् । "यत्संचरति उपविशत्युत्तिष्ठते च स प्रवर्ग्यः" तत्समाराधनाय पुष्पाद्याहरणार्थं यत्संचरति समाराधनार्थं भगवद्देहि समीपे उपविशति प्रदक्षिणनमस्कारार्थं उत्तिष्ठति स प्रवर्ग्यः । सर्वेषां तपोरूपत्वात् । "यन्मुखं" "तदाहवनीयः" हविषां प्रक्षेपस्थानं आहवनीयः । तद्वदेतन्मुखं निक्षेप्यपदार्थमग्निरूपत्वमिति सूचितम् । "यदस्याशनान्नं तत् जुहोति" अस्य प्रपन्नस्य यावत्परक्षकाय

विज्ञानंतज्जुहोति यत्सायंप्रात रत्ति तत्समिथोय
त्सायंप्रातर्मध्यंदिनंच तानिसवनानिये अहोरात्रेते
दर्शपूर्णमासौयेअर्धमासाश्चमासाश्चतेचातुर्मास्यानि
यऋतवस्तेपशुबंधाये संवत्सराश्चपरिवत्सराश्चतेहर्ग
णा स्सर्ववेदसंवा एतत्सत्रं यन्मरणंतदवभृथएतद्वै

विषयं विशिष्टज्ञानं " तत जुहोति " सहोमः, परमपावनत्वात् परमरक्षकत्वात् । " यत्सायंप्रातरत्ति " यदुभयोः कालयोः अयं प्रपन्नोऽत्ति । "तत्"प्रयाजानुयाजास्समिधः, आद्यन्तयोरुभयो स्सम्बद्धत्वात् । "यत्सायं प्रातर्मध्यं दिनंच तानि सवनानि " कालत्रयेषु सयद्यत् कुरुते तानि प्रातस्सवन माध्यंदिनसवन तृतीयसवनानि । " येअहोरात्रे ते दर्शपूर्ण मासौ" " येअर्द्धमासाश्च मासाश्च तेचातुर्मास्यानि " तेष्वनेनकृतस्याक्षय्य फलत्वात् चातुर्मास्यानीत्युक्तम् । " यऋतवस्ते पशुबन्धाः " वसन्तादिषु ऋतुषु तेनकृतानि यानि तानि पशुबन्धाः प्रतिसंवत्सरभावित्वात् । लोकविजयसाधनत्वाच्च । " येसंवत्सराश्च परिवत्सराश्च तेऽहर्गणाः " द्विरात्रत्रिरात्र चतूरात्रादयः अहस्संघरूपत्वात् । उक्तास्सर्वेकालवाचिनश्शब्दा स्तत्काल कृतोपलक्षकाः । अथवा तएवकालास्सवर्थमेव तत्तद्यागरूपाः । " सर्ववेदसंवा एतत्सत्रं " प्रपन्नजीवनं सर्ववेदसदक्षिणं सत्रम् । सत्रयागस्थानीयम् । श्रेयस्साधयितुं सह प्रवृत्तत्वात् । अथवास्य यजमानस्य सर्वतुसवधि सर्वं ' सर्ववेदसं ' सर्वं धनं । शरीरशरीरावयवादिकं तत सत्रं सत्रयागस्थानीयम् । श्रेयस्साधनं सह प्रवृत्तत्वात् सत्रमितितद्विदः । " यन्मरणं तदवभृथः " अस्य यजमानस्य यन्मरणं शरीरपरित्यागः, सोऽवभृथः अवभृथेष्टिः । समाप्तिरूपत्वात् । किं बहुना । " एतद्वैजरामर्यमग्निहोत्रं सत्रं " एतदस्य

जरामर्यमग्निहोत्रँसत्रंय एवंविद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छत्येतौ वै सूर्याचंद्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥

(७९) [८०]

इति चतुष्षष्टितमोऽनुवाकः ।

प्रपन्नस्यात्मयाजिनः जीवित जरामर्यमग्निहोत्रं जरयावयोहान्याहीयते समारोप्यत इति जरामर्यं मरणान्तं अग्निहोत्रम् । अग्नयेप्रनयनाय परमात्मने प्रत्यगात्मनाहूयत इति अग्निहोत्रम् । सदाप्रापकं सत्रा वात्रायकं सत्रम् । (य एवंविद्वानित्यादिना) एतद्वेदने फलं दर्शयति । स्वमात्मयागवि न्मरणानन्तरं सूर्याचन्द्रमसोर्महिमानं प्रथमं जित्वा तस्मादेव हेतो र्ब्रह्मणः पुरुषोत्तमस्य महिमानं महत्वं प्राप्नोति । समाप्तिद्योतिनीवाक्यावृत्तिः । ब्राह्मणग्रहणं प्रदर्शनार्थम् । सर्वोऽपि सूर्याचन्द्रमसो र्महिमान मभिजयति । तस्मादयं हेतोः ब्राह्मणो महिमानमाप्नोति प्राप्नोतीत्युपनिषत् ।

इति श्री कूरनारायणमुनि विरचिते तैत्तिरीयोपनिषद्व्याख्याने नारायणीये चतुष्षष्टितमोऽनुवाकः ॥ ६४ ॥

सामाप्ता चोपनिषत् ।

अंभसिभूरग्नये भूरन्नंभूरग्नयेचपाहिनोयश्छंदसां नमोब्रह्मण ऋतंतपो यथावृक्षस्यमणोरणीयांश्स हस्रशीर्षमृतमादित्योवाएषआदित्योवै तेजओजोघृणिस्सर्वो वैकद्रुद्रायनमोहिरण्यबाहवेयस्यवैकंकती कृणुष्व ाजोदितिरापोवाइदमापः पुनन्त्वग्निश्चसूर्यश्चायात्वोंभूरोंभूर्भुवस्सुवरोंत(द्ब्रह्मो)दुत्तमओमतश्च रत्यंमृतोपस्तरणंप्राणेनिविष्टःप्राणेनिविष्ट श्शिवोमृतापिधानमसि श्रद्धायांप्राणेनिविश्यप्राणानामंगुष्ठमात्रोमेधादेवीमेधांमइन्द्रोददातात्वप्सरास्त्वामांमेधावामदेवायाघो रेभ्यस्तत्पुरुषायेशानोब्रह्ममेतुब्रह्ममेधया ब्रह्ममेधवाप्राणापानवाङ्मनश्शिरःपाणित्वक्चमेशब्दस्पर्शपृथिव्यन्नमयविविद्द्विषोत्कायोत्तिष्ठो सत्यं प्राजापत्यस्तस्यैवंचतुष्षाष्टिः।

अंभसिवृषाहँसस्सर्वोवाआयातुश्रद्धायांतत्पुरुषाय

[ शब्दाशीतिः। ] ( पृथिव्येकान्नाशीतिः। )

अंभसीत्युपनिषत।



अत्रैव ( १२१- पुटे ) प्रतीकग्रहणेनोपात्तः । आरणे तृतीयप्रश्ने त्रयोदशोनुवाकः । यथा-

अद्भ्यस्सम्भूतःपृथिव्यैरसाच्च, विश्वकर्मणस्स मवर्तताधि, तस्यत्वष्टाविदधद्रूपमेति, तत्पुरुषस्यवि श्वमाजानमग्रे।१।वेदाहमेतंपुरुषंमहांतं,आदित्यवर्ण तमसःपरस्तात, तमेवंविद्वानमृतइहभवति,नान्यः पन्थाविद्यतेऽयनाय ॥२॥ प्रजापतिश्चरतिगर्भेअंतः, अजायमानोबहुधाविजायते ॥ ४० ॥ (१)

तस्यधीराः परिजानंतियोनिम , मरीचीनां पदमिच्छंतिवेधसः॥३॥योदेवेभ्यआतपति,योदेवानां पुरोहितः, पूर्वोयोदेवेभ्योजातः, नमोरुचायब्राह्म ये ॥४॥ रुचंब्राह्मंजनयंतः,देवाअग्रेतदब्रुवन्,यस्त्वै वंब्राह्मणोविद्यात,तस्यदेवाअसन्वशे॥५॥४१॥(२)

ह्रीश्चतेलक्ष्मीश्चपत्न्यौ,अहोरात्रेपार्श्वे, नक्षत्राणि रूपं, अश्विनौव्यात्तं, इष्टंमनिषाण, अमुंमनि षाण, सर्वंमनिषाण ॥ ६॥ ॥४१॥ (२)

जायतेवशेसतचं ॥१३॥

---

अस्मिन्नेव प्रश्ने प्रथमेऽनुवाके ( १२१ पृष्ठे ) प्रतीकग्रहणेनोपात्ता इमा अष्टावृचः । संहितायां चतुर्थकाण्डस्य प्रथमप्रश्नेऽष्टमेऽनुवाकेऽधीताः ।

हिरण्यगर्भस्समवर्तताग्रे भूतस्यजात.पतिरेकआसीत् , सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषा विधेम ॥१॥

यःप्राणतोनिमिषतोमहित्वैकइद्राजाजगतो बभूव, यईशेअस्यद्विपदश्चतुष्पदः कस्मैदेवायहविषा विधेम ॥२॥

यआत्मदाबलदायस्यविश्वउपासते प्रशिषंयस्य देवाः, यस्यच्छायामृतंयस्यमृत्युः कस्मैदेवायहविषा विधेम ॥३॥

यस्येमेहिमवन्तोमहित्वायस्यसमुद्रंरसया सहाहुः, यस्येमाः प्रदिशोयस्यबाहूकस्मैदेवायहविषाविधेम ॥४॥

यंक्रन्दसीअवसातस्तभानेअभ्यैक्षेतां मनसारेजमाने, यत्राधिसूरउदितौव्येति कस्मैदेवायहविषा विधेम ॥५॥

येनद्यौरुग्रापृथिवीच दृढेयेनसुवस्स्तभितं येन नाकः, योअन्तरिक्षेरजसोविमानः कस्मैदेवायहविषाविधेम ॥६॥

आपोहयन्महतीर्विश्वमायन् दक्षन्दधानाजनयन्तीरग्निं, ततोदेवानांनिरवर्ततासुरेकः कस्मैदेवायहविषाविधेम ॥७॥

यश्चिदापोमहिनापर्यपश्यद्दक्षंदधानाजनयन्तीगर्भं, योदेवेष्वधिदेवएकआसीत् कस्मैदेवायहविषाविधेम ॥ ८ ॥

---

अस्यैव प्रश्नस्य विंशोनुवाकः ( २१० - पुटे ) प्रतीकग्रहणेनोपात्तः। अयं संहितायाः प्रथमकाण्डस्य द्वितीयप्रश्ने चतुर्दशानुवाके श्रूयते।

कृणुष्वपाजःप्रसितिन्नपृथ्वीं याहिराजेवामवाँ इभेन, तृष्वीमनुप्रसितिंद्रूणानोस्तासि विध्यरक्षसस्तपिष्ठैः ॥ १ ॥

तवभ्रमासआशुयापतन्त्यनुस्पृश धृषताशोशुचानः, तपूंष्यग्नेजुह्वापतङ्गानसंदितो विसृज विष्वगुल्काः ॥ २ ॥

प्रतिस्पशोविसृजतूर्णितमो भवापायुर्विशो अस्या अदब्धः, योनोदूरेअघशँसोयो अंत्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ३ ॥

उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँओषता त्तिग्म हेते, योनोअरातिँसमिधानचक्रेनीचातंधक्ष्यतसन्न शुष्कं ॥ ४ ॥

ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने । अवस्थिरातनुहियातुजूनांजामिजामिंप्रमृणीहिशत्रून् ॥ ५ ॥

---

द्वितीयप्रश्नस्य भाष्यारम्भेऽनवधानेन प्रच्युताः काश्चनपङ्क्तयोऽत्र मुद्र्यन्ते ।

( ११० पुटे ) ' देवतायज्ञसाङ्गितः॥
तत्र ' – इत्यतः परम् –

" आद्याद्वादशसांहित्य स्तिस्रोवारुण्यउत्तराः ।
तत्राद्येनानुवाकेन विघ्नशान्तिर्विधीयते ॥
शिक्षायाः प्रतिपाद्यार्थं कथनेनततःपरम् ।
अवश्यंस्वरवर्णादे र्ज्ञेयत्वं प्रतिपाद्यते ॥
संहितापञ्चकोपास्ति स्तृतीयेनविधीयते ।
विद्यांगभूतं मेधादि प्रार्थ्यतेच चतुर्थतः ॥
व्याहृत्युपास्तिरंगत्वा त्पञ्चमेप्रतिपाद्यते ।
तात्रिष्ठानां देवयानं षष्ठेनप्रतिपाद्यते ॥
विद्यांगत्वा त्सप्तमेतु पाङ्क्त्योपास्तिरुच्यते ।
अष्टमेनोपासनार्थं प्रणवस्थं प्रशस्यते ॥
कर्मादे र्नवमेंगत्वा दनुष्ठेयाव मुच्यते ।
दशमेनतु विद्यार्थं प्राश्यन्ते कतिचिद्गुणाः ॥
एकादशेनचाचार्यं शिष्यंकुर्यात्वेषुशास्तिहि ।
द्वादशेनोत्तराशान्ति रेवंसांहित संग्रहः ॥

शान्तिस्त्रयोदशेनोक्ता वक्ष्यमाणसमुच्चये ।
अथान्तिमाभ्यां साक्षाद्धि ब्रह्मविद्याविधीयते ॥

एवं पञ्चदशानुवाकात्मकाः "" इति ।

---

अत्रेदं निवेदयामः- तैत्तिरीयोपनिषद्विप्रश्नद्वयात्मिका । आरण्यक इमौ पंचमषष्ठौ प्रश्नौ । पंचमः प्रश्नो विद्यारण्येन नव्याख्याति । शङ्कराचार्यैर्व्याख्यातमित्येव माधवेनोक्तासि । षष्ठो न शङ्कराचार्यैः । तथाऽऽनन्दतीर्थाचार्यैश्च । विद्यारण्यपदं व्याख्यायो । भट्टभास्करस्तु द्वावपि व्याख्यत् । श्रीरंगरामानुजमुनिश्च ।

तत्र शीक्षानन्दभृगुसमाख्यवल्लीत्रयरूपः प्रथमः प्रश्नः । शिक्षावल्ली द्वादशानुवाकात्मिका. आनन्दवल्ली अनुवाकद्वयात्मिका, भृगुवल्लीचैका नुवाकात्मिका । अयमेवपक्षो भट्टभास्कराचार्यस्य । शंकराचार्यरंगरामानुजमुनिवरयोस्तु आनन्दवल्ली नवानुवाकात्मिका भृगुवल्ली दशानुवाकात्मिका ।

अस्य भाष्यस्यकर्ता श्रीकूरनारायणमुनिवरस्तु भास्करमिश्रपक्ष मेवानुमोदते । तथैवच स्वभाष्ये व्यवहरति ।

एवं स्थितेपि दशोपनिषद्भाष्ये मुद्रिते नुसृतांशांति मेवात्र वय माश्रित्य द्वितीयतृतीयवल्ल्यो रनुवाकविभेदं न्यलिखाम स्वैरं मूल भाष्ययोः ।

तत्वतस्तु वल्लीत्रयात्मको त्रिकोपि प्रथमः प्रश्न आहत्य पञ्चदशा नुवाकात्मकएवेति भाष्यकारस्यास्य मतमिति ध्येयम् ।

तत्तन्मतानुसारेणानुवाकसंग्रहोपि दृश्यते । तच्च यथायथं तत्रतत्र मुद्रितमत्र ।